# स्वातन्त्र्यदर्पणः

(संस्कृत व्याख्यासहितः)



डा. बलजिन्नाथपण्डितस्य

श्रीरणवीरकेन्द्रीय-संस्कृत-विद्यापीठम्, जम्मू

शैवदर्शनकेन्द्रस्य तृतीयः परिस्पन्दः

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

# SVATANTRYA - DARPANA

With

Commentary in Sanskrit



DR. B. N. PANDIT

THE THIRD FLUTTER OF THE CENTRE OF SAIVISM

Publisher :

Dr. Murlidhar Pandey,

Principal, Shri Ranvir Kendriya Sanskrit Vidyapeetha,

JAMMU.

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

श्रीः

# स्वातन्त्र्यदर्पणः

संस्कृतव्याख्यादियुतः

(अभिनवं काश्मीर-शैवदर्शन-पुस्तकम्)



डा० बलजिन्नाथ-पण्डितस्य

श्रीरणवीर-केन्द्रीय-संस्कृत-विद्यापीठम्,

जम्मू ।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

समर्पितोऽयं ग्रन्थः

श्रीगुरुवर्येभ्यः

सर्वतन्त्रस्वतन्त्र-महामहिम-श्रीमद्-

अमृतवाग्भवाचार्य-

महोदयेभ्यो

—डा० बलजिन्नाथ पण्डितेन

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

प्रकाशक : श्री रणबीर केन्द्रीय संस्कृत विद्यापीठ,
जम्मू ।

प्रथम संस्करण : 1000 प्रतियां :

मूल्य : 24 रुपये

मुद्रक : आदर्श सैनिक प्रेस
जम्मू कैंट ।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

# प्राक्कथनम्

इदं स्वातन्त्र्यदर्पणाख्यं शैवशास्त्रपुस्तकं पूर्वं मया कस्यापि महाविद्यालयस्य पत्रिकायां मूलमात्रं प्रकाशितमभूत् । अनन्तरं सटिप्पणमिदं पुस्तकं शिमलापुरे दिव्यज्योतिपोऽङ्के क्रमशः प्राकाश्यं प्रयातम् । अधुना सुशोभनया संक्षिप्तया च संस्कृतटीकया विभूषितमिदमस्य संस्करणं श्रीरणवीरविद्यापीठस्य शैवदर्शनकेन्द्रात् प्रकाश्यते । अत्राध्येतॄणां सौकर्यार्थं परिभाषाकोषोऽप्यन्ते प्रदत्तोऽस्ति ।

इदं पुस्तकमीश्वरप्रत्यभिज्ञाविमर्शिनीं तन्त्रसारं चाधारीकृत्य निर्मितं वर्तते । अत्र काश्मीरशैवदर्शनस्य सर्वेषामपि मुख्यसिद्धान्तानां निरूपणमभिनवगुप्तपादानां दार्शनिकीं दृष्टिमाश्रित्य कृतं वर्तते । ततोऽस्य पुस्तकस्य सम्यक् पठनेनाभिनवगुप्तीयेषु शैवशास्त्रेषु प्रवेशः स्वल्पेनैवायासेन भविष्यति । प्रथमनिर्माणकालेऽत्र त्रिकयोगप्रक्रियाणां दिग्दर्शनमात्रमेव कृतमभूत् । परमनन्तरं तत्र प्रकरणे काश्चन कारिकाः परिवर्धिता याभिस्तासां प्रक्रियाणामपि स्वरूपस्य किञ्चित् स्पष्टीकरणं भवति । १३१ संख्याभिः कारिकाभिरिदं सुविस्तृतं शास्त्रं संगृहीतं वर्तते । निर्माणकालश्च तासां मूल एवोक्तो वर्तते । टीकानिर्माणं शब्दकोषनिर्माणमपि च मया वि०सं० २०३९ तमे वर्षे तदा कृतमभूद् यदाहं हिमाचलविश्वविद्यालये शिमलायां कार्यमकरवम् । परं प्रकाशनावसर इदानीमेवायातः । वर्षद्वयस्य प्रतीक्षानन्तरमस्यान्येषामपिच

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

केषांचिद् ग्रन्थानां प्रकाशनस्य स्वीकृतिरधुनैव लब्धास्माभिः । साऽपि च गुणैकपक्षपातिनां सद्यःसन्निर्णयकराणां च मान्यानां राष्ट्रियसंस्कृतसंस्थानस्य निदेशकमहाभगानां डा० मण्डनमिश्रमहोदयानां सत्सहयोगस्य फलमिति विदाङ्कुर्वन्तु विद्वज्जनाः ।

अस्य संस्करणस्य सम्पादनकर्मणि मुद्रणालयोचितप्रतिलिपिलेखकाः डा. श्रीद्वारिकानाथशास्त्रिणः, प्रूफशोधनकाराश्च डा० श्रीव्रजनन्दन शर्माणो धन्यवादमर्हन्ति । विद्यापीठेऽत्र यच्छैवदर्शनशोधकेन्द्रं तस्यैष तृतीयः परिस्पन्दः। पूर्वं तावदभिनवगुप्तीयस्य परमार्थसारस्य भगवद्दुर्वाससश्च ललितास्तवरत्नस्य प्रकाशनमत्र शैवदर्शनकेन्द्रे संजातमिति विदितमेवात्र शास्त्रे रुचिमतां विदुषाम् । अग्रेऽप्येवंप्रायाणां ग्रन्थरत्नानां प्रकाशनं विधास्यते निदेशकमहोदयानां प्रोत्साहनेनेत्यलं विस्तरेण ।

———

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

# प्रास्ताविकम्

यदा जगति क्वचित् कस्मिंश्चिज्जनसमाजे मानवा धर्मनिष्ठाः सन्तो राजनैतिकसुव्यवस्थया शासनसुप्रबन्धेन चार्थकामसम्बन्धिभ्यो महाकष्टेभ्यः सर्वथा मुक्ति लभन्ते, तदा तत्र तेषां चेतसि दार्शनिक्यो जिज्ञासा नितरामुदयन्ते। तदनुसारञ्च ते विचिन्तयन्ति—कोऽहम्, कुतोऽहम्, कथमहम्, किमिदं विश्वम्, कुत इदम्, कथमिदम्, किमत्र मे मुख्यं कार्यम्, किं मे जीवनस्य चरमं लक्ष्यम्, कस्तस्य लक्ष्यस्य साधीयानुपायः, कथं मे कृतकृत्यताकृतः परितोषः, कोऽस्य प्रपञ्चस्य सञ्चालकः, किम्प्रकारकस्तस्य स्वभावः, इत्येवमादि।

भारतवर्षे दीर्घदीर्घतरेभ्योऽपि महायुगेभ्यः प्रागेव केषामपि महानुभावानां चेतस्स्वेवंविधा जिज्ञासाः समुदिताः। ततस्तथा चिन्तयतां केषामपि जिज्ञासूनां विचारकाणां परायां विचारतन्मयतायां सञ्जातायां कथमपि स्वप्नजाग्रन्मयीभ्यो जीवनस्य स्थूलस्थूलतराभ्योऽवस्थाभ्यश्चेतसैवातिक्रमे सञ्जाते सति सूक्ष्मसूक्ष्मतरास्ताः अवस्थास्तेषां साक्षात्कारविषयतामाप्ताः। कदाचित् पुनस्तास्ववस्थासु तेषां चित्तमपि विलीनमिव सञ्जातम्।



CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

चित्ते विलीने सति केऽपि सूक्ष्मदृशो जिज्ञासवो जीवनस्य सूक्ष्म-सूक्ष्मतरान् स्वभावान् स्वयमेव, स्वेनैव, स्वात्मन्येव च साक्षादपरोक्षतयाऽन्वभवन। तादृश्या अवस्थायाः पुनः पुनरभ्यासेन केषामपि महानुभावानां तद्विषये का अपि धारणा हृदयङ्गमीभावमाप्ता:। अभ्यासाद् व्युत्थाय व्युत्थाय ते स्व-निकटवर्तिभ्यः शिष्य-सब्रह्मचारि-बान्धवादिभ्यस्तेषामुच्चतराणां सूक्ष्म-तराणाञ्च जीवनसम्बन्धिनां स्वभावानामुपदेशं बहुशः कृतवन्तः। जना-स्ताञ्जीवनतत्त्वस्य साक्षात्कारवतो महानुभावान् साक्षाद्दर्शनाद् "ऋषय इमे" इत्यकथयन्, तेषां चोपदेशजातं दर्शनमिति परिभाषितवन्तः। वस्तु-तस्तु तेषां तत्त्व-साक्षात्कार एव मुख्यं दर्शनम्। परं तदनुसारं प्रवर्तमान उपदेश-समूहोऽपि दर्शनमेव, दर्शनेन दृष्टस्य तत्त्वस्य बोधकत्वात्। भूयांस एवंविधा ऋषयो भारते आविरभूवन्। एतदेवाभिप्रेत्य प्रोक्तं निरुक्त-शास्त्रकृता यास्केन—

"साक्षात्कृत-धर्माण ऋषयो बभूवुः" इति (नि. १-२०-२)

उत्तमा ऋषयो योगाभ्यासबलेनास्माज्जागरदशोचितात् स्थूल-प्रायात् स्वात्मस्वरूपादुन्मज्ज्य, स्वप्नात्मकञ्चापि स्वभावं समुत्तीर्य सुषुप्ति-तुर्ययोर्दशयोः काश्चन विशेषविशेषा अवान्तरभूमिकाः साक्षादनुभूतवन्तः। तस्यां तस्यां चावान्तर-भूमिकायां प्रवर्तमानं जीवनव्यापारस्वभावमाश्रित्य तदनुसारमेवास्यां जाग्रदवस्थायां प्रवर्तमानस्य प्राणिजीवनस्य प्राणिलोकस्य च व्यापाराणामुपपत्तिं व्यवस्थां च बहुधा चक्रुः। तासाञ्च भिन्नभिन्नानां सूक्ष्मसूक्ष्मतराणामवस्थानां तत्तदवस्थागतानां चाधरोत्तराणां भूमिकानां

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

परस्परं बहुप्रकारकाद् भेदाज्जगदुपपत्ति-प्रकारेष्वपि तेषु परस्परं भेद एव प्रकटीभूत: । सुस्वाभाविकमेव तत् । तत एव जीवनतत्त्वसाक्षात्कारस्येम-मधरोत्तरस्तरभेदमाश्रित्य भारते दर्शनविद्या: बहुप्रकारतया प्रवृत्ता: प्रवृद्धाश्च । तासां विद्यानां मुख्याश्चत्वारो वर्गा: । ते च वर्गा: पृथक्-पृथक्-प्रकारां दार्शनिकीं दृष्टिमालम्ब्य जगत: प्राणिजीवनस्य च विषये उपपत्तिं पृथक्-पृथक्-प्रकारामेव चक्रु: । तत एव ते वर्गा: भिन्नभिन्नैर्नामभि: प्रसिद्धिं गता: । मुख्यास्तावद् वर्गा:—१ आरम्भवाद:, २ परिणामवाद:, ३ आभास-(विवर्त्त) वाद:, ४ स्वातन्त्र्यसिद्धान्तश्चेति । प्रथमेषु त्रिष्वपि पक्षप्रतिपक्ष-परिग्रहोऽभ्युपगमात्मककल्पनामय: । तेन ते वादा: इति । तुर्यं पुनर्वस्तु-स्थितिकथनमात्रमभ्युपगम-कल्पना-रहितम् । ततोऽसौ सिद्धान्तो, न वाद: । तस्य स्वातन्त्र्यवाद इति कथनमविचारितभाषितमेवेति विदाङ्कुर्वन्तु सुधिय: ।

तत्रारम्भवादप्रधाने दर्शनवर्गे मुख्यं तावद्दर्शनविद्याद्वयम्, तच्च न्याय-दर्शनं वैशेषिकदर्शनञ्च । तत्प्रवर्त्तकास्तावल्लकुलीशगुरुप्रवर्तितं योगम-भ्यस्य सुषुप्ते: कामपि तथाविधामवान्तरभूमिकां भूरिशोऽभ्यासवशाद् हृदङ्गमीभावपुरस्सरं साक्षाच्चक्रुर्यस्यां भूमिकायामात्मा प्रवृत्तिशून्यो निश्चेष्टस्तिष्ठति, यत्र चासौ ज्ञानसुखादिविशेषगुणव्यापारसामर्थ्ये विद्यमानेऽपि प्रवृत्तिरूपनिमित्तकारणाभावान्नैव तेषु प्रवर्तते मनागपि । तामवस्थामेव ते जीवनस्य चरमं प्रयोजनमुद्घोषयन्तोऽपवर्गनाम्ना तामूचु: । यद्यप्यपवर्गशब्द: पश्चान्मोक्षदशायां सामान्यरूपतयाऽऽचार्यै: सामान्य-दृष्ट्यैव भूरिश: प्रयुक्तो वर्तते, परं तथापि मूलत: पदं तत् सुषुप्ते: प्रकार-

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

विशेषाभिधायितयैवारम्भदर्शनप्रवर्तकैः प्रयुक्तमासीदिति सुधीभिः स्मर्त्तव्यम्। अत एव हैमे कोशे—

"..............अपवर्गस्त्यागमोक्षयोः।

क्रियावसाने साफल्ये...................।" इत्युक्तम्

ते हि दार्शनिकाः योगाभ्यासबलेन सुषुप्तेर्निम्नतमां भूमिकां साक्षात्कृत्य पश्चात्तस्याः सुषुप्तेः किञ्चिदधो वर्तमानां स्वप्नकल्पां कामपि योगभूमिकामधिष्ठाय विचिन्तयन्तः स्थूलायाः अस्या जाग्रत्सृष्टेरुपपत्तिमित्थं कृतवन्तः—

सर्वे तावत् प्राणिनोऽनादिना मिथ्याज्ञानेन परिभूताः सन्तो रागद्वेष-मोहानां महादोषाणां तत्प्रपञ्चभूतानां च भूयसां दोषाणां पात्रतामुपगताः सन्तो दोषप्रभावतो जगति पदार्थान् हिताहितरूपानाकलय्य हितप्राप्तयेऽहित-निवारणाय च साधुनाऽसाधुना च पथा प्रवर्तमानाः पुण्यपापकर्माण्या-चरन्ति। तत्फलभोगाय च संसृतिचक्रे बम्भ्रम्यमाणा महान्ति दुःखान्यनु-भवन्ति। परमकारुणिकः सर्वज्ञः सर्वशक्तिमांश्चेश्वरो जीवानां कर्मफल-भोगाय योगाभ्यासतश्च तेषामपवर्गदशाप्तये परमाण्वादिपदार्थानुपादाय जगतः सृष्टिस्थिती कुरुते। काले काले च जीवानां विश्रान्त्यै जगत् संहरति। कर्मफलभोगं लभमानेष्वेव जीवेषु कश्चन शास्त्राभ्यासे प्रवर्तते, योगमभ्य-स्यति, तत्फलतया च यथार्थज्ञानं लभते। तेन तत्त्वज्ञानेन तस्यानादि-कालात् प्रवर्तमानमज्ञानं नश्यति। तस्मिन्नष्टे दोषा निवर्तन्ते। दोषनिवृत्तौ प्रवृत्तिः शाम्यति। तस्यां शान्तायां प्राणी कर्माणि नैव कुरुते। योगाभ्यास-बलेन भूयांसि सञ्चितानि कर्माणि समकालमेव भुञ्जानः सन् केनापि-

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

कालेन सत्वरं तानि सर्वाणि समापयति । तथा कृते सति प्रारब्धकर्मावसाने यदा शरीरं त्यजति तदा कर्माऽभावात् पुनः संसृतौ न प्रवर्तते । संसृतेर्मुक्तः सन् प्रवृत्तिं त्यजति । कर्माणि तस्यान्तं गतानि भवन्ति । ततो दुःखनिवृत्ति-रूपं जीवनफलमासादयति । तदनन्तरमाकाशवदचेष्टः शान्तश्च चिरं तिष्ठति । सैवाऽस्यापवर्गदशा प्रवृत्तित्याग-संसृतिमोक्षकर्मावसान-जीवन-साफल्यस्वरूपा जीवनस्य चरमं लक्ष्यम् । इत्येवंप्रकारका जगदुपपत्तिरारम्भ-वादिनाम् ।

आरम्भवादिभ्यः सूक्ष्मतरविचारकास्तावत् परिणामवादिनः । तैर्निर्बीजसमाध्यभ्यासोपायतः समुत्कृष्टतरा जीवनस्य कापि तादृश्यवस्था साक्षादनुभूता यस्यां तैः स्वात्मा सकलज्ञानक्रियाप्रपञ्चसामर्थ्यसंश्लेषेणापि रहितः शुद्धकेवल-चित्प्रकाशमात्रशरीरः, सर्वथाप्यत्यन्ततटस्थ, उदासीनो, लिङ्गशरीरेणापि शून्यः, अत एव चात्यन्तं केवलः साक्षात्कृतः । तत्रासौ चेतनत्वेन साक्षित्वसामर्थ्ययुक्तः सन्नपि केवलत्वेन कारणेन न कस्यापि साक्षित्वं भजते । ततः साक्षित्वादपि विरतोऽत्यन्तं सुप्रशान्तो दृष्टः । तदवस्थातोऽधः सम्प्रज्ञातसमाध्यवस्थायां तैरेतत्साक्षात्कृतं यद् गुणत्रय-साम्यस्वरूपं जगतो मूलकारणभूतमविचित्रं मूलप्रकृतिसमाख्यं प्रमेयतत्त्वमेव स्वयमेव परिणममानं परमाण्वादिरूपतां धत्ते सृष्टिकाले, संहारकाले च सर्वमपि परमाण्वादिसहितं कार्यजातं विपरीतपरिणामतः पुनर्गुणत्रयसाम्यावस्थायां विलयं याति । विलये विश्वमव्यक्ततामापद्यते, उदये च पुनर्व्यक्तताम् । अवस्थाद्वयमिदं क्रमेण प्राप्नुवत् सर्वं वस्तुतः सत्यमेव सदैव च सद्रूपतया विद्यमानमेव । ततो नैव किमप्यभिनवमारभ्यते ।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

केवलं व्यक्ततामव्यक्तताञ्च काले काले याति । नैव किमप्यविद्यमान-मुत्पद्यते न चापि विद्यमानं किमपि नश्यति । अपितु कारणजातं कार्यजात-रूपतया परिणमते सृष्टौ कार्यजातञ्च कारणजाततायां परिणमते संहारे । स चोभयविधः परिणामः प्रकृतेः स्वेनैव स्वभावेन भवति । नात्र कश्चि-त्तस्याः परिणमयिता । सर्वमपीमं जगद्व्यवहारं सञ्चालन्त्यपि मूलप्रकृति-र्जडैव ।

साक्षिभूतः पुरुषस्तु चेतनः । तस्य स्वभाव एव चैतन्यम् । स्वभावत एवासावुदासीनस्तटस्थः स्वात्मस्वरूपनिष्ठश्च । परमनादिनाऽविवेकेन परिवेष्टितया बुद्ध्या संपृक्ताः पुरुषाः प्रकृतेर्गुणपरिणामभूतस्य तस्य बुद्धितत्त्वस्य विशेषपरिणामात्मकान् ज्ञानाज्ञानादीन् सुखदुःखादींश्च विकारान् साक्षिरूपतया पश्यन्तस्तेषां भोगं लभन्ते । गुणपरिणामभूतोऽहंकार स्तेषु ममत्वाभिमानसम्पादकः । तांस्तानाहङ्कारिकानपि विशेषान् यतः पुरुषो साक्षित्वेन पश्यति ततस्तस्य पुण्यपापादिसङ्गोऽपि भवत्यविवेकवशात् । तत एव जन्म-व्याधि-जरा-मृत्युप्रभृतिपरिणामजातभोगोऽपि तस्य प्रवाह-रूपतया चलति । एष एव तस्य बन्धो बुद्धितत्त्वसम्पर्ककृतः ।

यदा पुनः कश्चन जनो योगाभ्यासतः सर्वस्यास्य प्राकृतिकप्रपञ्चस्य वास्तविकं तत्त्वं साक्षादनुभवति तदा तस्य बुद्धावेव विवेकः समुदेति यत्—सर्वोऽयं प्रपञ्चः प्रकृतिपरिणामभूतायाः बुद्धेरेव, नास्य साक्षिणः चितिस्वरूपस्य पुरुषस्य । स तु पुष्करपलाशवन्निर्लेप एवेति । एतस्यैवं-

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

विधस्य प्रकृतिपुरुषविवेकज्ञानस्यापि साक्षी पुरुषो भवति। ततो विवेक-साक्षात्कारे जाते सति यदा प्रारब्धवशाच्छरीरं तस्य पतति, तदा तस्य पुरुषस्य बुद्धिस्तं परित्यज्य प्रकृतौ लीयते। पुरुषश्च सर्वथा केवलस्तिष्ठति। केवलः सन् प्रमाणप्रमेयाभावे सति न कस्यापि भावस्य साक्षी भवति। साक्षिभावे च व्यपगते न भोगं लभते। ततोऽत्यन्तमेकान्ततश्च सर्वेभ्योऽपि दुःखेभ्यो मुक्तः सन्नाकाशवत्सर्वथा सुप्रशान्तस्तिष्ठति। एषा सर्वथा केवलत्वावस्था तस्य कैवल्यम्। कैवल्यमिति पदमपि सामान्यतो मोक्ष-पर्यायत्वेन प्रयुज्यते। परं मूलतः परिणामवादद्रष्टृभिर्महर्षिभिर्विशेषार्था-भिधायितया प्रयुक्तमभूदिति वेदितव्यं सुजनैः। एतत् केवलत्वमेव जीवनस्य चरमं लक्ष्यम्। सांख्यशास्त्रतत्त्वविचारणं योगसाधना-भ्यासश्चैतस्योपायौ। स एव परिणामवादः। सांख्याः पातञ्जलाः योगिनश्च मुख्याः परिणामवादिनः। पाशुपताः, वैष्णवाः, श्रीकण्ठमतानु-यायिनोऽपि च परिणामवादिन एव। परमंशतस्तैः स्वातन्त्र्यसिद्धान्तो-ऽप्याश्रितः।

बौद्धास्त्वेवमुपदिशन्ति, अयं दृश्यमानः संसारः वस्तुतो न सत्यः। परं यथा स्वप्नसंसारश्चित्तसंस्कारप्रबोधतः केवलमाभासते एवाविद्यमानो-ऽपि, तथैव चित्तवासनाप्रबोधवशादेवेदं विश्वमपि केवलमाभासते एव। वासनाश्रयभूतं चित्तमपि न किमपि स्थिरं तत्त्वम्। अपितु क्षणिकविज्ञान-प्रवाहरूपमेव। विज्ञानरवञ्च तस्यात्मप्रज्ञप्तिविषयावभासयोर्जनकत्वम्। तेन चित्तमात्मनः सत्तां प्रज्ञापयत्यहमिनि। तदेवालयविज्ञानम्।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

विषयावभासमध्यवस्यतीदमिति । तदेव प्रवृत्तिविज्ञानम् । द्वयमप्येतत् प्रवहद्रूपं क्षणिकं च । उभयं वासनामूलकम्, स्वप्नसंसारवत् । ततः क्षणिकचित्तप्रवाहास्तेषां द्विप्रकारकक्षणिकविज्ञानप्रवाहाश्चेत्येतदेवास्ति सत्यम् । अन्यन्नास्ति किमपि । ततश्चित्तातिरिक्तो नास्ति कोऽप्यात्मा । न चाप्यस्ति कश्चिदीश्वरः । बाह्यं जगत् सौत्रान्तिकादिमते विद्यमानमपि विज्ञानवादिमते नास्त्येव वस्तुतः । असदेवेदं वासनाबलात् केवलमवभासते । एषा वासनैव संसारदुःखबीजम् । ततो योगस्य ज्ञानस्य चाभ्यासेन संसारस्यासत्ताया निश्चयः परिपक्वतयाऽङ्कनीयश्चित्ते । दृढीभूते तस्मिन् निश्चये, क्षीणासु च वासनासु, शान्तेषु सर्वेषु क्लेशेषु यदा देहः पतति तदा चित्तं वासनारहितं सन्नैवालयप्रवृत्तिविज्ञानद्वयमवभासयति । आलयप्रवृत्तिविज्ञानयोरुच्छेदे सति प्रभास्वरं, शुद्धं, केवलं च चित्तमेव प्रवहद्रूपमवशिष्यते । स एष विज्ञानवादो बौद्धानाम् ।

शून्यवादिनस्तु तस्य प्रभास्वरस्य चित्तस्य विज्ञानत्वमपि न स्वीकुर्वन्ति । यतोहि विषयावभासबलेनैव तद्विज्ञानमिति वक्तुं शक्यते । विजानातीति विज्ञानम् । विषयावभासे अविद्यमाने सति नैव तस्य विज्ञानत्वम् । ततस्तज्ज्ञातृज्ञेयप्रपञ्च-रहितं किमपि शून्यमेव प्रतिपद्यते । न वस्तुतो विज्ञानम् । तदित्थं विज्ञाने शून्यतामापन्ने विज्ञानात्मकक्षणिकचित-प्रवाहोच्छेद एव तस्यामवस्थायां भवति । प्राणिनः किमवशिष्यते इति प्रश्नस्योत्तरे न किमपीति वक्तुं शक्यम् । सैषा अभावात्मिकालयविज्ञानो-च्छेददशा निर्वाणमिति व्यपदिश्यते, क्षणिकदीपज्वालाप्रवाहोच्छेदवत् ।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

निर्वाणपदमपि सामान्यतो मोक्षपर्यायत्वेन प्रयुज्यते । परं मूलतः पदमेतदालयविज्ञानोच्छेदवाचकतया प्रयुक्तं योगाचारनिष्णातैर्बौद्धभिक्षुभिरिति सुधीभिरङ्गीकार्यम् । तदमी स्वात्मोच्छेदमेव परं जीवनप्रयोजनं मन्यमानाः बौद्धाः विश्वं वासनाभासमात्रमङ्गीकुर्वन्त आत्मतत्त्वस्य ईश्वरस्य च सत्तामपह्नुवाना नास्तिका आभासवादिनः ।

वेदान्तवादिनः पुनरास्तिका आभासवादिनः । ते तु सच्चिदानन्दस्वरूपं ब्रह्मैवैकं सत्यं तत्त्वं स्वीकुर्वन्तो जगदिदमनादेरज्ञानादेवाभासतेऽविद्यमानमपि, स्वप्नजगदिवेति मन्यन्ते । तदज्ञानं तेऽविद्येति व्यपदिशन्ति । अविद्याञ्च तामनिर्वाच्यां प्रतिपादयन्ति । ततस्तद्विषये मौनमेवोपदिशन्ति । वस्तुतोऽविद्यमानमेवेदं जीवजगदीश्वराख्यं त्रिकमविद्या-बलादवभासते केवलमिति वदन्ति । तदयमसत्यस्यावभासो विवर्त्तः । ब्रह्मैवास्त्येकं सत्यं तत्त्वम् । तदेवाविद्यावशाज्जीवं प्रति जगदादिरूपतयावभासते । अन्यस्य तत्त्वस्यान्यरूपतया भासनमपि विवर्त्त एव भ्रमात्मकज्ञानमूलकः । ततोऽयं वेदान्तिनामाभासवादो "विवर्त्तवाद" इत्युच्यते । ततो विवर्त्त एवेदं सर्वम् । ब्रह्मैव केवलं सत्यम् । तद् ब्रह्मैवाहमित्येवंप्रकारकं सत्यं ज्ञानं यदा परिपक्वतां याति, तदा जनो जीवन्नपि संसारप्रपञ्चे न व्यामुह्यति । ततोऽसौ जीवन्नपि मुक्तस्तिष्ठति । शरीरपाताऽनन्तरञ्च ब्रह्मैव सर्वथाऽवशिष्यते । यतस्तस्याविद्याकल्पितो जीवभावः सर्वथा विलीनो भवति । कल्पितस्य जीवभावस्य क्षयः पारमार्थिकस्य च ब्रह्मभावस्य स्थिति-

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

रित्येतावत्परमार्थो मोक्षो यो जीवनस्य मुख्यं प्रयोजनम्। तदमी वैवर्त्तिकं जगदाभासं मन्यमाना वेदान्तिनोऽपि तावदाभासवादिन एव। उभयप्रकारेय-आभासवादिनामुपपत्तिस्तावदात्मनः सौषुप्तं स्वभावं समाश्रिता। यतस्तस्य स्वभावस्य साक्षात्कारदशायां सर्वं शून्यतायां विलीयमानमेवानुभूयते। बौद्धानां सा सुषुप्तिः पराऽपवेद्या सुषुप्तिरेव। वेदान्तिनां पुनः सैव तुरीयोन्मेषसम्भिन्ना। तत एव तेषां सच्चिदानन्दतानुभूतिः। इयांस्तावदनयोः परस्परं विशेषः। ततो बौद्धाः प्रलयाकलतां वेदान्तिनश्च विज्ञानाकलतामाप्नुवन्ति। स्वात्मनः परमेश्वरतायाः साक्षात्कारस्याभावेन न ते शिवतालाभभाजः।

तुर्यदशायां विजृम्भमाणो जीवनस्वभावो यैः साक्षादनुभूतस्ते तावदात्मनः परिपूर्णं स्वातन्त्र्यं परमञ्च तस्येश्वरत्वं प्रतिपन्नास्तदनुसारमेवेत्थं जगदुपपत्तिं कुर्वन्ति—एकमात्रं पारमार्थिकतया सत्यं तत्त्वं तावत् परब्रह्मैव। तदेव पारमैश्वर्यमण्डितं सत् स्वस्वभावादेव सततमेव सृष्ट्यादिकृत्यपञ्चकप्रवणमेव भवति। तत एव स्वेच्छया स्वस्यैव च पारमैश्वर्यस्य महिम्ना स्वेनैव स्वातन्त्र्येण स्वं लीलाविलासं स्वात्मन्येव प्रकटयन् जीवजगदाकारतया, परिमितेश्वराकारतया च स्वयमेव प्रकाशते। तस्माद् भिन्नं नान्यत् किमपि वासनाविद्यादिकं जगतो मूलकारणं भवितुमर्हति। सर्वस्य तस्य सृष्टत्वात्, परतन्त्रत्वाज्जडत्वात्, सामर्थ्यरहितत्वाच्च। ततः स्वस्वातन्त्र्यमहिम्ना निग्रहकृत्यस्य लीलामभिनयन् परमेश्वर एव जीवरूपतयाऽऽभासमानः संसरति। पुनः स एवानुग्रहकृत्यलीलामभिनयन्

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

क्वचिज्जीवदशायामेव गुरुशास्त्रोपासनया स्वं स्वभावभूतं परमेश्वरत्वं पुनः प्रत्यभिज्ञाय कृतकृत्य इव भवन् जीवन्मुक्ततयावभासते। तच्छरीरपाते सति तावदेकघनया पूर्णपरमेश्वरतयैव प्रकाशते। स एष तुर्यदर्शनभाजां सिद्धानां स्वातन्त्र्यसिद्धान्तो मुख्यतयाऽद्वैतशैवदर्शने सुविकासं प्राप्तोऽस्ति।

विशुद्धाद्वैतादिवादिनो वैष्णवाः भागवताद्याः पुरातनाः वैष्णवाः, वीरशैवादयश्चापि स्वातन्त्र्यसिद्धान्तमधिकांशतः समाश्रिताः, परं नासौ सिद्धान्तस्तेषां ग्रन्थेषु तथा परिपूर्णं विकासं प्राप्तो यथा काश्मीरशैव-ग्रन्थेषु। एष परः स्वातन्त्र्यसिद्धान्त एव मुख्यतयोपदिष्टोऽस्ति ऋग्वेदीये पुरुषसूक्ते, वागम्भृणीये च सूक्ते। उपनिषत्स्वपि तावदयं पारमैश्वर्य-सिद्धान्त एव बहुधा प्रतिपादितोऽस्ति। भगवद्गीतास्वप्ययमेव मुख्यतया गीतोऽस्ति। युगचतुष्टयेऽपि काले काले प्रकटतामापन्नानां सिद्धजनानामयं स्वातन्त्र्यसिद्धान्त एवाभीष्टः। शङ्कराचार्यप्रभृतिभिर्वेदान्तिभिरपि प्रपञ्चसारादिषु तन्त्रग्रन्थेषु सौन्दर्यलहरीप्रभृतिषु च स्तोत्रेष्वयं पारमैश्वर्यसिद्धान्त एवोत्कृष्टतमसिद्धान्ततया प्रकटितः। यस्त्वजात-वादस्तैः क्वचित् क्वचित् स्फुटमुपदिष्टः, स त्वनुत्तरस्य परतत्त्वस्य सर्वथा-प्यनिर्वाच्यत्वाभिप्रायेण, न तु जगदुपपच्यभिप्रायेणेति प्रतीयते। चेदेवं नाभविष्यत्तर्हि कथं गौडपादशङ्करसदृक्षाः सिद्धपदवीभाजः पुरुषोत्तमाः स्ववचनविरोधावहं किमप्यकथयिष्यन्। ततस्तमजातवादमाश्रित्य संसारस्योपपत्तिकरणं नैव न्याय्यम्। परं तेषामनुयायिभिरेतन्नैव विचारितं प्रायो, नापि विचारयन्तीदानीमपि। केवलं भ्रान्तिवादमेव साटोपमुद्-घोषयन्तः स्वात्मानं जगच्च भ्रान्तिसागरे निमज्जयन्ति। तत एव शून्यवादस्य सामीप्यं प्राप्ताः सन्तो वेदान्तिनोऽर्वाचीनैः पारमैश्वर्य-सिद्धान्तरसरसिकैः "प्रच्छन्नबौद्धाः इमे" इति व्यपदिष्टाः।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

तदमी सर्वेऽपि दर्शनवादास्तत्तदधिकारिवर्गभेदात् सप्रयोजनाः तासु तासु च भूमिकासु यथार्थाः युक्तियुक्ताश्चेति मन्तव्याः । परं सर्वेषामप्येषां युक्तियुक्तत्वस्थापिका अनुसन्धायिका च या दृष्टिरसौ स्वातन्त्र्यसिद्धान्तदृष्टिरेव । यतः स्वानुभूतिसम्पन्नानां सिद्धानामसौ सिद्धान्तः शिखरस्थज्ञानवत् सर्वं स्वस्थाने पश्यति स्थापयति च । तत एव च "सैद्धं मतम्" इति व्यपदिष्टः सिद्धेन स्वतन्त्रानन्दनाथेन "मातृकाचक्रविवेके"

ज्ञानस्य सिद्ध्यति विना क्रियया न रूपं
तस्यास्तथैव न हि तेन विनोपलम्भः ।
तस्मात्तयोर्यमलतैव मतं हि सैद्धं
पूर्वापरत्वकलनं त्विह पूर्वपक्षः ।
(मा.च.वि. १—१६)

असौ सैद्धमतानुसारी स्वातन्त्र्यसिद्धान्तः कश्मीरमण्डले सुविकासं प्राप्तायां पराद्वैतदृष्टिप्रधानायां त्र्यम्बकाख्यायां शैवमठिकायां सोमानन्दोत्पलदेवाभिनवगुप्तसदृशैरुत्कृष्टतरैः सकलशास्त्रतत्त्वज्ञैः स्वानुभूतिवैभवसमृद्धैः सिद्धजनैः साङ्गोपाङ्गं सुतरां प्रतिपादितो वर्तते । तेषामाचार्याणां मुख्येभ्यः शास्त्रेभ्योऽस्य पराद्वैतशैवदर्शनस्य सिद्धान्तान् संगृह्य सरलया शैल्या सुबोधैश्च पद्यैर्विरचितोऽयं स्वातन्त्र्यदर्पणाख्योऽभिनवो ग्रन्थः सर्वानपि जिज्ञासून् सुधियः शिवभक्तान् नन्दयेदित्याशास्महे । पाठकानां कृते तत्र तत्र समुपनिबद्धया संस्कृत-टिप्पण्या गूढानां, स्पष्टमनुक्तानां, संक्षेपत एव निर्दिष्टानां, उपलक्षणनीत्या च संसूचितानां विषयाणां सम्यक् प्रकाशनमत्र कृतं वर्तते ।

शिवभक्ता अनेन तुष्यन्तु तृप्यन्तु चेति पुनराशास्महे । भगवाञ्छिवोऽप्यनेन वाक्पुष्पपूजनेन सुतरां प्रसीदत्विति प्रार्थयते ग्रन्थकारः ।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

# विषयसूचिः



CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

॥ श्रीः ॥

अथ

# स्वातन्त्र्यदर्पणः

## प्रथममाह्निकम्

## इतिहासपद्मः

विश्वमिदं सुविचित्रं
यो ह्यविचित्रः प्रकाशयन् देवः ।
जयति स हि मे प्रसीदतु
शक्तिघनः कोऽपि पूर्णपरमेशः ॥१॥

परमेश्वरः विश्वोत्तीर्णतायामनुत्तरे पदे संविन्मात्ररूपत्वेनाविचित्रः । हि मे इतिपदद्वयमपि, एकमपि च पदम् । हिमे—जडे जीवत्वे, जडवस्तुन्यात्मत्याभिमानरूपे बन्धे । प्रसीदतु— शिवमार्गे मामग्रेसरं करोतु । शक्तिघनः— सैन्धवघनन्यायेन सर्वतः सर्वथा सर्वदा च शक्त्यात्मक एव, अनन्तानां पारमेश्वरीणां शक्तीनामेकघनस्वरूपः ।



CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

आरभमाणः सततं निरुपादानं
स्वतो जगत् सकलम् ।
शक्त्या स्वयापरिणमन् बिभ्रत्
प्रतिबिम्बकल्पमिव विश्वम् ॥२॥

स्वप्नभ्रमतुल्यमिदं निखिलं
चाभासयन् विकल्पकुलम् ।
स्वस्वातन्त्र्यमहिम्ना जयति हि
विलसन् स कोऽपि परमेशः ॥३॥

निरुपादानमिति— न तु परमाणूपादानमारम्भवादिनामिव मते। अपरिणमन्— न तु शिवाद्वैतवैष्णवादीनामिव मते प्रधानवत् शक्तिरूपतायां परिणामं भजमानः। स्वयमेव स्वयैव शक्त्या विश्वमाभासयन्, न तु विवर्तविज्ञानशून्यवादिनामिव मतेऽविद्यादिकृतः प्रपञ्चस्य आभासः ।

अधिकारिभेदभिन्नं निखिलं
सच्छास्त्रजालमपि यस्य ।
लीलानुग्रहरूपं शास्त्ररहस्यं
स मे प्रकाशयतु ॥४॥

सर्वं हि शास्त्रजालं भगवदनुग्रहरूपमेव । न खलु किमप्यवरमपि बौद्धार्हततार्किकादिशास्त्रं निष्प्रयोजनम् । सर्वस्य तस्याधिकारिभेदेन सफलत्वात् । सर्वाणि शास्त्ररहस्यानि पारमेश्वरादनुग्रहादेवावबुद्ध्यन्ते ।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

येषां रतिर्महेशे गतिर्न
शास्त्रेष्वतीवगहनेषु ।
तेषां सुखबोधार्थं ललितं
शास्त्रं विरच्यते शैवम् ॥५॥

शिवदृष्टिप्रभृतीनीश्वरप्रत्यभिज्ञातन्त्रालोकादीनि च शैवशास्त्राण्यतीवगहनानि । निर्मास्यमानञ्च शास्त्रं सरलं सुबोधं शास्त्रतत्त्वप्रतिपादकञ्च । तेन गहनशास्त्रप्रवेशोपायभूतम् ।

देवेन शैवशास्त्रं मानव-
लोकेऽवतारितं त्रैधम् ।
श्रीनाथीयं द्वैताद्वैतं
द्वैतं त्वमर्दकीयं हि ॥६॥

त्रैधम्— अभेददृष्ट्या, भेददृष्ट्या, भेदाभेददृष्ट्या चोत्तमाधममध्यमाधिकारिणां कृते । श्रीनाथोऽमर्दकनाथश्च सिद्धौ शिवस्याज्ञयैव क्रमेण भेदाभेददृष्ट्या भेददृष्ट्या च शास्त्रप्रचारार्थं भूलोकमवतीर्णौ । एवमग्रे वक्ष्यमाणस्त्र्यम्बकादित्योऽपि ।

अद्वैत-शैव-शास्त्रं भगवद्-
दुर्वाससो वदनकमलात् ।
सरहस्यं सोपासं सिद्धः
सम्प्राप त्र्यम्बकादित्यः ॥७॥

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

त्र्यम्बकादित्यस्तु सिद्धो भगवतो दुर्वाससो मानसः सुतोऽभेद-दृष्ट्या शैवशास्त्रप्रचारार्थं भुवमवतीर्णः । तस्याद्वैतशैवमठिकेदानीमपि प्रचलत्येव । त्र्यम्बकादित्येनापराप्यभेदप्रधाना शैवमठिका स्व-दुहितृद्वारा प्रचालिता । परमद्यत्वे सापि लुप्तैव । अभिनवगुप्तस्य ज्ञानविज्ञानदो गुरुर्जालन्धरपाठस्थः श्रीशम्भुनाथस्तस्या एव तुरीयमठिकाया-स्तात्कालिको गुरुरभवत् ।

तद्वंशे षोडशकः पुत्रो
नाम्ना तु सङ्गमादित्यः ।
तीर्थान्यटन् द्विजन्मा न्यविशत
कश्मीरमण्डलं रम्यम् ॥८॥

त्र्यम्बकवंशे— पञ्चदश पुत्रास्तु मानसा एव त्र्यम्बकादित्य इत्येव नाम भजमानाः । ते च सिद्धतया वर्णविभागोत्तीर्णा एव । ब्राह्मणेन विधानेन कृतब्राह्मणकन्यापरिग्रहात्पञ्चदशात्त्र्यम्बकादित्याल्लब्ध-जन्मायं सङ्गमादित्यो यथार्थनामा द्विजन्मा चेति । असावष्टमे रव्रं स्ताब्दशतके कश्मीरानागत्य तत्रैव स्थिरतया निवासं चकार । ततस्तस्य वंशस्तत्रैव प्रसारमलभत ततः प्रभृति ।

तत्सन्ततौ बभूवुर्मठिका-
गुरवो यशस्विनस्तेषु ।
तुर्यः सोमानन्दश्चक्रे
शिवदृष्टिनामकं शास्त्रम् ॥९॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

त्र्यम्बकनाम्ना ख्यातायाः शैवमठिकायाः विविधागमग्रन्थावतारका आचार्या एव मठिकागुरवः । तेषामागमानां मध्ये मालिनीविजयोत्तर-तन्त्रम्, स्वच्छन्दतन्त्रम्, नेत्रतन्त्रम्, विज्ञानभैरवः, परात्रीशिका, शिवसूत्रम्, इत्यादय आगमा अद्यापि लभ्यन्ते । सर्वे एव मठिकागुरवः सङ्गमादित्यस्य पुत्रपौत्रादयः शिष्यप्रशिष्यादयश्च । सङ्गमादित्यस्य सुतो वर्षादित्यस्तस्यारुणादित्यस्तस्य चानन्दनामा गुरुः । आनन्दाचार्यस्य सुतः सोमानन्दः सङ्गमादित्यस्य सन्ततौ चतुर्थः पुत्रः । तद्विरचिता शिवदृष्टिः शैवदर्शनस्य प्रथमं दार्शनिकशैल्या विरचितं पुस्तकम् ।

उत्पलदेवः शिष्यस्तस्य
ग्रन्थांश्च प्रत्यभिज्ञादीन् ।
व्याख्यातवांश्च शास्त्राण्य-
भिनवगुप्तः प्रशिष्यकस्तस्य ॥१०॥

ईश्वरप्रत्यभिज्ञां, सिद्धित्रयीं, उभयोर्वृत्ती, शिवदृष्टिवृत्तिं, शिवस्तोत्रावलिम्, ईश्वरप्रत्यभिज्ञा-विवृतिम् (अद्यत्वेऽलभ्याम्) इत्यादीन् ग्रन्थानुत्पलदेवः कृतवान् । तस्य शिष्यो लक्ष्मणगुप्तः, तस्य चाभिनवगुप्तः । स तावदीश्वरप्रत्यभिज्ञाविमर्शिनीम्, ईश्वरप्रत्यभिज्ञाविवृतिविमर्शिनीं, शिवदृष्ट्यालोचनम् (अद्यत्वेऽलभ्यम्) परात्रीशिका-विवरणम्, इत्यादीं-ष्टीकाग्रन्थान् निर्मितवान् । अयमभिनवगुप्तः तदुक्तीनामनुसारं अत्रिगुप्ता-ख्यस्य ब्राह्मणस्य वंशे समुत्पन्नो ब्राह्मणो—न वैश्य इति । एवमेव प्राक्काले विष्णुगुप्तब्रह्मगुप्तादयोऽपि ब्राह्मणाः गुप्तोपनामकाः । वस्तुतस्ते गोप्तारः । "गोप्ता ग्रामशताध्यक्षः" इति तल्लक्षणात् ।

ग्रन्थांश्च बहून् कृतवांस्तन्त्रा-
लोकादिनामकान् रुचिरान् ।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

तन्त्रालोक-तन्त्रसार-मालिनीविजयवार्तिकादीन् महामहिममण्डितान् स्वतन्त्रान् ग्रन्थानप्यभिनवगुप्तो रचितवान् ।

बहवस्तस्य च शिष्याः
परम्परायां गताश्च साक्षाच्च ॥११॥

अन्ये च सिद्धपुरुषा वसुगुप्तक-
कल्लटादिगुरवोऽत्र ।
शास्त्राणि च टीकाश्चारचयन्
खलु भूरिशः कृपानुन्नाः ॥१२॥

साक्षाच्छिष्याः क्षेमराजादयः, परम्पराश्च योगराज-वरदराज-जयरथादयः। वसुगुप्त-कल्लट-भट्टनारायणादयो हि तावदभिनवगुप्तादपि सुपुरातना गुरवस्त्र्यम्बक-मठिकायाः । आदिपदेन रामकण्ठ-भास्कर-शितिकण्ठादयः काश्मीरिकाः महेश्वरानन्दाद्याश्च दाक्षिणात्याः संग्राह्याः। तेषां शास्त्राणि स्पन्दकारिका, प्रत्यभिज्ञाहृदयम्, शिवसूत्रवार्तिकं, स्पन्दविवृतिः, महार्थमञ्जरी, महानयप्रकाशः इत्यादीनि सुबहूनि ।

अभ्यस्य वाङ्मयं तत् सुविमृश्य
मुहुर्धिया स्वया सुचिरम् ।
श्रुत्वा श्रीगुरुवदनाद्
गूढं तत्त्वं विरच्यते शास्त्रम् ॥१३॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अनेन पद्येन ग्रन्थकरणे सामर्थ्यमधिकारश्च दर्शितौ । गूढं हि तत्तत्त्वं यच्छास्त्रशब्दैः सुप्रतिपादयितुमशक्यम्, यच्च शास्त्रेषु व्याख्यासु चापि स्पष्टतया नैकत्र ख्याप्यं न चाप्यत्यन्ततो गोप्यम् । तत्तत्त्वदृष्ट्यैव माहेश्वरेषु शास्त्रेषु कृतो विचारो याथार्थ्यं भजते, तत्तत्त्वानुकूलमेव च कृतं माहेश्वरशास्त्र-सिद्धान्त-प्रतिपादनं यथार्थं भवति । यतो माहेश्वरं शास्त्रं सैद्धं मतम् । न केवलं पदपदार्थ-मात्रोपजीविविद्वज्जनगम्यम् । श्रीगुरवश्चास्माकं तत्रभवन्त आत्म-विलासादिशास्त्रनिर्मातार आचार्यामृतवाग्भवपादाः ।

अत्र कारिकाः =१३

इति श्रीस्वातन्त्र्यदर्पणे सटिप्पणे
इतिहासपक्षात्मकमाह्निकं
प्रथमम् ।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अथ

द्वितीयमाह्निकम्

# परमशिवनिरूपणम्

स्वातन्त्र्यं सुखमूलं योनि-
दुं:खस्य पारतन्त्र्यं हि ।
स्वातन्त्र्यमेव भुक्ति मुक्ति
चैवाप्यलं सदा दातुम् ॥१॥

व्यावहारिकं स्वातन्त्र्यं भुक्तिप्रदं, पारमार्थिकञ्च तन्मुक्तिप्रदम् । उभे च भुक्तिमुक्ती जीवनफले । अत एवागमशास्त्रं भुक्तिमुक्तिप्रदमिति प्रसिद्धिः । तत एव च विद्याविद्ये उभे उपासितव्ये इत्युपनिषत्सिद्धान्तोऽपि । मुक्तिमवहेलयन् मुक्त्यभिलाषी तावदुभयस्माद् भ्रश्यन् दृश्यते लोके । केवलया भुक्त्या च नैव कृतकृत्यतालाभः । अतो भुक्तिमुक्ती उभे आप्तव्ये ।



CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

परमेश्वरः स्वतन्त्रः सर्वस्यात्मा
सदा स्वतःसिद्धः ।
शास्त्रालोस्कतु परं प्रहाणये
मोहजालतिमिरस्य ॥२॥

सर्वे हि प्राणिनः स्वप्रकाशतया स्वस्य सत्तां सदा विमृशन्त एव स्वयमेव स्वं संविदन्ति—अहमिति। मोहवशाच्छरीरादिकं जडमेव वस्तु स्वात्मत्वेनाभिमन्यमानानां तेषां मध्ये ये मुमुक्षवो मोक्षाधिकारिणश्च तेषां मोहमात्रं शास्त्रेण तदभ्यासेन चापसार्यते केवलम्। अपसारिते च तस्मिन् शुद्धः संविद्रूपः पारमैश्वर्यस्वभावः स्वात्मा स्वयमेव स्वत एव च प्रकाशमानः पुनः पुनरपरोक्षेण साक्षात्कारेण हृदङ्गमीभावमापाद्यते स्वबोधाभिनन्दनपूर्वकं, न पुनरप्रकाशितं किमप्यभिनवतया प्रकाश्यते। ततः स्वात्मपरमेश्वरः स्वत एव सिद्धः ।

यद्यल्लोके सिद्धं तत्तत्सर्वं
प्रकाशमाहात्म्यात् ।
स्वमहिम्नैव तु सिद्धः
सिद्धेर्मूलं सदा प्रकाशोऽसौ ॥३॥

यदेव हि वस्तु कस्यापि प्रमातुर्बुद्धिदर्पणे प्रतिबिम्बितं सत्तस्य प्रकाशते, तदेव हि स्थापयितुं शक्यते इदमस्तीति। ततः प्रकाश एव सर्वस्य सिद्धेर्मूलम्। तस्य च चैतन्यात्मकस्य प्रकाशस्य न किमप्यपरं वस्तु प्रकाशकं वा साधकं वास्ति। सर्वोऽपि हि जन्तुः प्रकाशरूपं स्वात्मानं सततं स्वत एव प्रकाशमानमुभयविधकरणग्रामनिरपेक्षतयैव स्वयमेव संवेत्त्यहमिति ।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

बहुविधवैचत्र्येण प्रकाश-
मानेषु विषयनिकरेषु ।
स्फटिकोपलवत्स्वच्छे नैव-
भिदा कापि तु प्रकाशे स्यात् ॥४॥

यथा खलु स्फटिके नीलपीतादि-घटादि-प्रतिबिम्बे विद्यमानेऽपि वस्तुतः स्फटिकस्तत्तत्प्रतिविम्बानुपरक्त एव तिष्ठन् शुद्धां स्फटिकतां मनागपि नातिक्रामति, तथैव नीलादिषु सुखादिषु च प्रकाशभित्तौ लग्नतामात्रेण प्रकाशमानेष्वपि प्रकाशः प्रकाश एव न वस्तुतो नीला-द्यात्मकः कथञ्चनापि, नीलादेस्तत्र प्रतिबिम्बमात्रत्वेनाभासमानत्वात् ।

स्फटिको जड एव परं
नैव स संवेत्ति येन सत्त्वं स्वम् ।
विमृशति सदा प्रकाशः
स्वयमेव स्वं विमर्शसारत्वात् ॥५॥

स्फटिकस्त्वात्मानमहमिति, स्वस्मिन् प्रतिबिम्बितञ्च वस्तुजात-मिदमिति परामष्टुमक्षमः । ततोऽसौ जडोऽप्रकाशः । परं प्रकाशसारः प्रमाता प्रथमं स्वात्मानमहमिति सदा विमृशन्नास्ते । ततः स्वात्मभित्तौ लग्नं नीलसुखादिकमपि विमृशतीदमिति । एतद्विमर्शनस्वभावत्वमेव प्रकाशस्य चैतन्यं स्फटिकादेर्जडाद्वैलक्षण्यम् ।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

रूपं निजं प्रकाशो विमर्श-

शून्यस्त्यजेत्प्रकाशत्वम् ।

एवं तथा विमर्शः प्रकाश-

शून्यस्त्यजेन्निजं सत्त्वम् ॥६॥

विमर्शशून्यं हि वस्तु स्फटिकवज्जडमेव, ततोऽप्रकाशम् । विमर्श एव हि प्रकाशस्य स्वभावभूतमसाधारणं लक्षणम् । यच्च पुनर्न प्रकाशात्मकं तन्नैव कथमपि प्रकाशेत । यच्च पुनर्नैव प्रकाशेत कथमपि, तस्य सत्तैव न सिद्ध्येत् । अतो विमर्शस्याप्रकाशरूपतायां मन्यमानायां विमर्शोऽपि नैव प्रकाशेत । एवं तस्य सत्ताऽपि नैव सिद्ध्येत् । ततो विमर्शः प्रकाशात्मकः सन्नेव प्रकाशते प्रकाशश्च विमर्शात्मकः सन्नेवात्मानं विमृशन्नास्तेऽहमिति ।

नामद्वयमेकस्य प्रबोधनार्थं

तु वस्तुनः कलितम् ।

अविनाभावनिबद्धौ

काशविमर्शौ परस्परस्यात्मा ॥७॥

काशः प्रकाश एव, यतः स एव काशितुमलं सन्, प्रकर्षेण काशते । सततं स्वमहिम्नैव काशमानायाः संविद एव नामद्वयं प्रकाश इति विमर्श इति च । सर्वस्य च स्वात्मा संविद्रूप एव वस्तुतः, प्रकाशविमर्शरूपत्वात् । प्रकाश एव हि विमर्शो, विमर्श एव च प्रकाशः । एकमेव तत्त्वमित्थं सम्बोधार्थं द्वाभ्यां पदाभ्यामुच्यते, तस्य तत्त्वस्य द्विप्रकारकशक्तिस्वरूपत्वात् ।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

संविन्मयः स आत्मा

समरसरूपस्तयोः स्वतःसिद्धः ।

ज्ञानक्रियास्वतन्त्रः

केनापह्नूयतां कथं नाम ॥८॥

प्रकाशविमर्शयोः परं सामरस्यं संवित् । संविन्मयः— आत्माऽहमिति । तस्य च प्रकाशनमेव सुसूक्ष्मं ज्ञानं, विमर्शनमेव च तथाभूता क्रिया । उभयत्र च स्वातन्त्र्यमात्मदेवस्य । यतः सर्वोऽपि प्रमाता स्वत एव प्रकाशितुं विमष्टुं च शक्तः । को हि प्रज्ञावान् स्वात्मानमपह्नुवीत— नाहमस्मीति । मूर्खोऽप्यात्मानं नापह्नुते ।

स्वातन्त्र्यात्परमेशः स्वभावतो-

ऽसौ समुच्छलद्रूपः ।

तस्य समुच्छलनं यत्

तदेव विश्वं शिवादिभूम्यन्तम् ॥९॥

स्वातन्त्र्यमेवेश्वरत्वम् । प्रकाशश्च वस्तुत एक एव । देहादिकृतस्य भेदस्य मायीयत्वेन शुद्धप्रकाशकल्पितत्वेन च वक्ष्यमाणत्वात् । इत्येक एव वस्तुतः प्रमाता विश्वत्र स्वतन्त्रः । स एव परमेश्वरः । परमशिव इति तस्यैवाभिधानम् । अनवच्छिन्न-जगदानन्दोर्मि-समुद्वेलितस्य तस्य संवित्सिन्धुकल्पस्य यत् स्वाभाविकं समुच्छलनं तस्यैव फलं शिवादिधरण्यन्ततत्त्वव्रातसृष्टिसंहारादिकम् । संवित्तत्त्वस्य स्वात्मनि समुच्छलद्रूपत्व सर्वस्य स्वानुभवसिद्धम् । यतस्तेन समुच्छलनेनैव

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

सर्वोऽपि जन्तुः ज्ञातुं, कर्तुं, प्रकाशितुं, विम्रष्टुञ्च स्वत एवोन्मुखो भवति सततम् । विशेषतश्चास्य प्रदीप्तिः हर्ष-शोक-क्रोधादि-भावानां तीव्रतरेष्वावेशेषु क्षणं सावधानतया संवेद्यते प्रबुद्धैः प्रमातृभिः । चित्त-संकल्प-विकल्प-द्वयमध्ये सुधृतावधानैरपि धीरैः क्षणं तत् समुच्छलनं संवेद्यते । एवमेव काव्यश्रवणे नाट्यदर्शने च शृंगारादिरसास्वादक्षणेऽपि तत् संवेद्यतेऽवधानधनैः सहृदयैः । रहस्यसाधनानिष्ठैर्विषयोपभोगानन्द-क्षणेष्वपि स्पष्टमनुभूयते ।

परमेशतां च तस्य स्वतन्त्रतां
क: कथं स्फुटं ब्रूयात् ।
स्पन्दः स्फूर्तिः घूर्णि-
सिद्धैरित्थं ततः सुनिर्दिष्टा ॥१०॥

एतत् समुच्छलत्तात्मकमौन्मुख्यमेव मुख्यं परमेश्वरत्वं परमशिवस्य । एतद्रहितत्वे तस्य शून्यप्रायत्वं जडप्रायत्वं चाभविष्यत्, न चाभविष्य-त्सृष्ट्यादिकम् । तदभावे तस्य परमेश्वरत्वमपि, सत्त्वमपि वा नैवाभि-व्यक्तमभविष्यत् । तदेतत् प्राक्तनस्य पद्यस्य टिप्पण्यां निर्दिष्टै-रुपायैः स्वयं संवेदनीयं सुधीभिः । सुनिर्दिष्टेति न साक्षाद् वाचकेन शब्देन निश्चितरूपतया प्रतिपादिता, तथा प्रतिपादयितुमशक्यत्वात्तस्याः । ततस्तस्या अभिव्यक्तिरेव भवति नाभिहितिः ।

अचलस्यापि चलत्तेवान्तः-
संरम्भरूपिणीव रुचिः ।
सा, तस्यां विश्रान्तिर्या-
ऽऽनन्दोऽसौ परो महेशस्य ॥११॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

चलत्तेव न तु सत्यं चलत्ता स्थूला, अपितु अचलेऽपि संवित्तत्त्वे चलात्ताया आभासमात्रम्, येन ह्यचलमपि तच्चलमिवाभासते । स्वस्वरूपान्मनागपि न च्यवते, तथापि विश्वरूपतामापन्न इवाभासते प्रतिबिम्बन्यायेन । सेति—स्फूर्तिः स्पन्दरूपता परमेश्वरता । रुचिरिति हेवाकप्राया विशेषता कापि । तस्यां विश्वसिसृक्षादिरूपिण्यां रुचौ या विश्रान्तिः सैव परमशिवस्य जगदानन्दरूपता । स च स्पन्दः परशिवे उदेति, तत्रैव च लयं याति । ततः परशिवे स्पन्दो न तु परशिवः स्पन्दः । स्पन्दस्य तद्विलासरूपत्वात् ।

अनया विना महेशोऽस्थास्यत्

कूटस्थ एक एव सदा ।

अस्थास्यदपि न वासाव-

करिष्यन्निर्णयं तथा को वा ॥१२॥

विश्वसिसृक्षादिरूपया रुच्या विना परमशिवः सततं स्वरूपमात्रनिष्ठः सन् कूटस्थ इवाभविष्यत् । सृष्टावसम्पन्नायां तस्य सत्तासत्तयोर्विषये शङ्किनो निर्णायकस्य चाभावात् कः शङ्केत, को वा निर्णयं कुर्यात् ।

इत्थं महेश्वरत्वं सोऽत्यक्ष्यद-

चेतनो भवन् शून्यः ।

न परं तथा स देवः

सत्तानन्दरसमुदाहमिति तस्य ॥१३॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

कूटस्थे वस्तुमात्र एव स्थिते कः परमेश्वरः, कस्य परमेश्वरः, कीदृक् च परमेश्वरत्वं कस्य । आकाशस्येव शून्यत्वं जडत्वञ्च तत् कूटस्थत्वम् । सत्तानन्दश्चाहमिति शुद्धः संवित्संरम्भात्मकोऽचलस्यापि चलत्तात्मक इव कोऽपि विशेषः । देहप्राणादिरूपे जडे वस्तुनि योऽहमिति विमर्शो नासौ पारमेश्वरः सत्तानन्दोऽपि तु जडत्वाभाससम्भिन्न एव परिमितस्वभावः, संकोचशालित्वात् ।

चितिमात्रो हि यतोऽसौ
प्रकाशमानश्चितेः प्रकाशत्वात् ।
प्रत्यवमर्शसतत्वाहमिति
चितिश्चापि यन्निसर्गवशात् ॥१४॥

चितिः—चैतन्यं संविद्रूपता, प्रतीपमात्माभिमुख्येनावमर्शनमेव प्रत्यवमर्शोऽहमिति । न तु बहिर्देहादिविषयकमपीति । एवंविधः स्वरूपावमर्श एव हि चितेः स्वभावः । तत एव चितिः स्वात्मानं सततं विमृशति अहमिति ।

अहमिति परिपूर्णोऽसौ
शिवादिभूम्यन्ततत्त्वजातेन ।
सर्वञ्च तत्र शुद्धं
संविद्रूपं सुसमरसाकारम् ॥१५॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

तत्त्वजातं हि परमेश्वरे परिपूर्णाहंरूपे सदैव विद्यमानमेव, अन्यथा कुतः सृज्येत। परं परायामवस्थायां तत् परिपूर्णाहंरूपतयैव तत्रावतिष्ठते, वृक्ष इव बीजावस्थायां बीजरूपतया। अतस्तत्र सर्वमहमित्येव। न तत्रे-दन्ताया नामापि। तच्चाहं शुद्ध-प्रकाश-विमर्श-सामरस्य-स्वरूपा संविदेव।

तत एव च तच्छक्त्या
प्रभवति सर्वं प्रलीयते तत्र।
सर्गादिशक्तिरेषा शून्य-
जडाभ्यां प्रभोर्विलक्षणता ॥१६॥

शक्तिश्चात्र स्पन्दात्मिका व्याख्यातरूपोन्मुखता। प्रभवोऽत्रे-दन्तयाभासनमात्रमहंस्वरूपतया विद्यमानस्य विश्वस्य प्रलयश्चेदन्तया-भासमानस्य प्रमेयांशस्य पुनरहन्ताप्रकाशरूपा स्थितिः।

एतत् सत्कार्यत्वं यथार्थतः
सम्मतं सदा सिद्धैः।
प्राधानिकपरिणामाद्
यत्त्वपरं बालसम्मतं तत्तु ॥१७॥

निखिलं प्रपञ्चजातं शुद्धेऽपरिमितेऽहमिति संवित्तत्त्वे तथा-विधसंविदात्मकतया सदा वर्तते। संविद एव शक्तिरेषा यदसौ प्रपञ्चरूपतयाऽऽभासते। ततः प्रपञ्चस्य तत्र तच्छक्तिरूपतया या विद्यमानता सैव मुख्यः सत्कार्यवादः। बालसम्मतम्-सांख्याद्यवराधिकारि-

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

सम्मतं यत्र परिणामावादापेक्षा। पारमेश्वरं सर्वद्यवितमस्वात्मकं सत्कार्यत्वञ्च सिद्धजनसम्मतम्। अत एवेदमेव यथार्थं नेतरत्, तस्य तर्कमात्राश्रितत्वात्।

अत्र कारिकाः=१७    पूर्वाभिः सह=३०

इति श्रीस्वातन्त्र्यदर्पणे सटिप्पणे

परमशिवनिरूपणाख्यमाह्निकं

द्वितीयम्।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अथ

तृतीयमाह्निकम्

# षट्त्रिंशत्तत्त्वनिरूपणम्

स्वानन्दनिर्भरोऽसौ स्वात्मो-

ल्लासेच्छया समाविष्टः ।

आनन्दत्वेन शिवः

शक्तिश्चेच्छामयत्वतः कथितः ॥१॥

परमेश्वरो हि वस्तुतः शक्त्येकघनः। सर्वं जगत्तस्य शक्तीनामेवाभिव्यक्तिः। तस्य परमेश्वरतायाः बहिर्मुखोऽयं विकासः। विकासस्य सोपानक्रमेण परायाः पारमेश्वर्याः शक्तेः पञ्चविधा अन्तरङ्गा अभिव्यक्तयः पञ्चभिर्नामभिर्व्यवह्रियन्ते। ताश्च चिदानन्देच्छाज्ञानक्रियाख्याः पञ्चान्तरङ्गशक्तय उच्यन्ते परमशिवस्य। तत्रानुत्तरः परमशिवश्चिच्छक्तिरित्युच्यते। सर्वाः अपि शक्तयश्चिच्छक्तावन्तर्भूतास्तिष्ठन्ति। सा चित् सततं जगदानन्द-



CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

निर्भरैव । चित एव स्वस्वरूपविश्रान्तिरानन्दः । आनन्दशक्तिप्रधाना चितोऽभिव्यक्तिरेव शिवतत्त्वम् । आनन्दस्योर्मिरिवेच्छा । स्वसामर्थ्योल्लिलासात्मिकेयम् । इच्छाशक्तिप्रधाना चितोऽभिव्यक्तिः शक्तितत्त्वम् । शिवशक्त्योरभेदेऽपि सति तत्त्वद्वयकल्पनमिदं नाऽन्याय्यम्, अस्य तत्त्वाऽवधारणायामुपयुक्तत्वात् । अन्यथा तत्त्वषट्त्रिंशकमपि परमशिवादभिन्नमेव वस्तुतः, इत्येकमेव तत्त्वं परमार्थतः ।

स शिवः प्रकाशरूपो
विमर्शरूपश्च कथ्यते शक्तिः ।
अभिधानमात्रभिन्नः
सम्बोधार्थं न वस्तुतो भिन्नः ॥२॥

परमशिवो हि वस्तुतः शक्तः सन्नेव काशितुमलम् । अत एवास्मद्गुरुभिः श्रीसिद्धमहारहस्याख्ये शास्त्रे शाक इत्युक्तः । तत्र शकनं सर्वसामर्थ्यं शाकः । शाक एवाभिव्यक्त्युन्मुखः सन् सततं काशते । स्वकल्पितप्रमेयजातापेक्षया प्रकर्षेण स्वातन्त्र्येण स्वमहिम्ना तस्य काशनमेव तस्य प्रकाशत्वम् । प्रकाशस्तस्य स्थिरं स्वरूपम् । स च प्रकाशोऽन्तःकृतविमर्शः सन्नेव प्रकाशो भवति । निर्विमर्शस्य तत्त्वस्याप्रकाशत्वात् । विमर्शश्च प्रकाशान्तर्गतश्चैतन्यसंरम्भ इव कोऽपि स्वानुभवसंवेद्यो विशेषः । तन्महिम्ना परमशिवः सततं सृष्ट्यादिपञ्चकृत्योन्मुख एव तिष्ठति । तत् स्वसम्बोधार्थं परसम्बोधनार्थञ्च परमशिवः शास्त्रे प्रकाशप्राधान्येन विमर्शगुणीकारेण च शिव इत्युच्यते, स एव विमर्शप्राधान्येन प्रकाशन्यग्भावेन च शक्तिरित्यभिधीयते । एवमुच्यमानोऽपि वस्तुतोऽभिन्न एवासौ । परमेश्वरस्यान्तर्मुखः स्पन्दोन्मेषः शिव इति, स एव च बहिर्मुखः शक्तिरित्युच्यते ।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

विश्वौत्तीर्णः स शिवो

विश्वमयत्वे स एव शक्तिरिति ।

यवहारमात्रमेतन्नैव हि

शक्तिः शिवात् क्वचिद् भिन्ना ॥३॥

स्वात्मपरमेश्वरो हि सिद्धजनैर्विश्वोत्तीर्णत्वेन विश्वमयत्वेनापि च साक्षात्क्रियते । उभयथा साक्षात्कारेणैव परिपूर्णा स्वरूपप्रत्यभिज्ञा सम्पद्यते । ततो वैदान्तिकी विद्या विश्वोत्तीर्णत्वमात्रपरत्वेनाङ्गविकलैव । परस्य पारमेश्वरस्य स्पन्दस्यान्तर्मुखा स्फुरत्ता शिवत्वं विश्वोत्तीर्णत्वम्, बहिर्मुखा च सा विश्वमयत्वं शक्तित्वम् ।

स्वातन्त्र्यमेव शक्तिः

शिवनाथस्य स्वतो यया सूते ।

निरुपादानं विश्वं सैव

शिवत्वप्रयोजिका तस्य ॥४॥

सृष्ट्यादिकृत्यपञ्चकप्रवणं शिवस्य लीलोन्मुखं स्वातन्त्र्यं यत् स्वभावभूतम्, तदेव तस्य शक्तिः । यदि शिवः स्वभावत एव सृष्ट्यादिकृत्यपञ्चक-निभालन-शक्तिमयो नाभविष्यत् तदा शून्यवच्छिव एवासौ नाभविष्यत् ।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

शक्तिः शिवस्य शिवता शक्तेः
शिव एव चास्ति शक्तित्वम् ।
दाहादिशक्तिवह्न्योरिव
शिवशक्त्योः सदैव तादात्म्यम् ॥५॥

यथैकमेव वह्निरूपं वस्तु दाहनप्रकाशनादिशक्तिरिति वा, वह्निरिति वोच्यतेऽनुसन्धानभेद-कारणात्, तथैवैक एव भगवान् परमशिवः शिव इति शक्तिरिति चोभयथा प्रोच्यते शास्त्रेऽनुसन्धानद्वैविध्येन । इति वस्तुतः शिवशक्त्योरभेद एव । शिवस्य यच्छिवत्वं तत्तस्य शक्तिरेव । अशक्तस्य शिवत्वाभावप्रसङ्गात् । शक्तिश्चापि शिवात्मिका सत्येव शक्तिर्भवति । अशिवस्याशक्तत्वात् ।

शैवी स्वोल्लासेच्छा
प्रथमं रूपद्वयेन दीव्यन्ती ।
ज्ञानं सदाशिवत्वे
क्रियेश्वरत्वेऽवभात्यभिन्नापि ॥६॥

स्वभावतोऽभिन्नापि परा पारमेश्वरी शक्तिः स्वस्वातन्त्र्यविजृम्भया फलभेदाभिव्यञ्जकत्वेन ज्ञानशक्तित्वेन क्रियाशक्तित्वेन चावभासते । ज्ञानं तावदन्तरेव प्रमेयवस्तुनोऽवभासनं प्रमातृनिष्ठम्, क्रिया पुनः प्रमेयताप्राधान्येन तदवभासनं भेदोन्मेषमयम् । तदुभयावभासनमेव तत्त्वद्वयं सदाशिवेश्वराख्यम् । सदाशिवतत्त्वे शुद्धस्यापरिमितस्य प्रमातृतत्त्वस्यान्तरत्यन्तमस्फुटं प्रमेयांशावभासनम् "अहमिदमिति" । ईश्वरतत्त्वे

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

पुनस्तस्य स्फुटमवभासनम् "इदमहमिति" । पूर्वत्र प्रमात्रंशस्योत्तरत्र च प्रमेयांशस्य प्राधान्येनावभासः । इत्यनयोरयं भेदः । ततः पूर्वत्र ज्ञानशक्ते-रुत्तरत्र च क्रियाशक्तेः प्राधान्येनाभिव्यक्तिः ।

प्रथमा दशा निमेषः कथितः
शास्त्रेषु चापरोन्मेषः ।
उभयत्र वर्तमाना शक्ति-
र्देवस्य शुद्धविद्याख्या ॥७॥

प्रथमा सदाशिवदशा, अपरेश्वरदशा । निमेष इत्युन्मेष इति चानयोरागमिके संज्ञे । शुद्धविद्याख्यं पञ्चमं तत्त्वम् । तच्च भेदे सत्यप्यभेद-दृष्टिः सदाशिवतत्त्वे, अभेदे सत्यपि भेददृष्टिरीश्वरतत्त्वे । उभयथेयं भेदाभेददृष्टिरेव । अनयैव दृष्टया पश्यन्ति सदाशिवेश्वरतत्त्वस्थाः प्राणिनः ।

अहमिति पूर्णं पश्यन्
शक्त्यन्तमभेदभूमिकां भजते ।
तदधो विद्यान्तमसौ
भेदाभेदात्मिकां दशां शम्भुः ॥८॥

शिवशक्तितत्त्वयोस्तावत्प्रमेयांशस्य नामापि नावभासते । सर्वं हि तत्र परिपूर्णमहमित्येव । ततो न तत्र भेदावभासलेशोऽपि । परं सदाशिवादि तत्त्वत्रयं भेदाभेदात्मकम् । अहमः इदमश्च द्वयस्यापि सामानाधिकरण्येन भासनात् ।

एतद्दशावतीर्णस्त्वहमिदमिति
संविदङ्छिवः सकलम् ।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

भेदाभेदमयीं तां दृष्टिं

शुद्धां प्रकाशयति विद्याम् ॥९॥

द्विप्रकारा तावत् शुद्धविद्या। सदाशिवतत्त्वे "अहमिदम्" इत्यहमंशस्य प्राधान्येनेदमंशस्य च गुणीभावेन, ईश्वरतत्त्वे च "इदमहम्" इतीदमंशस्यैव प्राधान्येनाहमंशस्य च गुणीभावेन। शुद्धविद्यातत्त्वे चोभयथापि समधृततुलापुटन्यायेनैवांशद्वयस्य विमर्शः। अंशद्वयावमर्शनकारणादत्र भेदः, सामानाधिकरण्येन विमर्शनादभेदोऽपि। भासनादियं विद्या, अभेदमाहात्म्याच्च शुद्धा।

माया-शक्तिः परमा शम्भो-

र्भेदावभासनोन्मुखता।

ईशसदाशिवभूमाविदमंशो

यद्वशान्मनाग्भाति ॥१०॥

परेयं माया शक्तिर्यद्वशाच्छिवो भेदोन्मेषणप्रवणो भवति। मायाख्यातत्त्वादियं भिन्ना। मनागित्यस्फुटतया भेदेप्यभेदस्वभावतया च। सर्वथा भेदेनैवावभासनमेव हि स्फुटमिदन्तावभासनम्। तच्चाग्रिमे मायाख्ये षष्ठे सृष्टे तत्त्वे भवति।

स्वात्मावरणं शम्भोर्मायातत्त्वं

पुनः समाख्यातम्।

इदमिति सर्वं भिन्नं

पश्यति शिव एव तत्प्रभावेण ॥११॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

षष्ठमिदं तत्त्वं मायाख्यम्। एतस्या अपराया मायायाः प्रभावेण शिव एव मायादशामवतीर्णः संञ्जीवरूपतयाऽऽभासमानः सर्वं विषय-जातमात्मनः सकाशाद् भिन्नं पश्यति "अहमिदं वेद्मि करोमि वा" इति। इयं मायैवाग्रिमस्य जडस्य तत्त्वव्रातस्योपादानम्। तत इयमपि जडैव।

जडमेव च देहादि

स्वात्मत्वेनाभिमन्यते मोहात्।

नैव च संवेत्ति निजं

संवित्त्वं मायया परिच्छिन्नः ॥१२॥

मोहस्तु मायाकृत एव। परिच्छिन्न इति परिमिततामापादितः। आत्मनः शुद्धसंविद्रूपतां न संवेत्ति। शुद्धं संवित्तत्वं स्वात्मतया नाभिमनुते।

कथितस्तत्र पुमाख्यः

कञ्चुकषट्केन भाति सङ्कुचितः।

कालः कला च विद्या रागो

नियतिः स्वयं च माया तत् ॥१३॥

पुमाख्य इति पुरुषनामा। कञ्चुकवेष्टितं चित्तत्त्वं पुरुषतत्त्वम्। तदिति कञ्चुकषट्कम्। माया तु परिगणिता। अपरं कञ्चुकपञ्चकं कालादिकं तत्त्वपञ्चकम्। इत्थं कञ्चुकतत्त्वमेलनेन तत्त्वसंख्यैकादशतां प्राप्नोति।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

काल: क्रमस्वरूपो
मातृत्वेनाभिमन्यमानस्य ।
जडदेहादेस्तेन क्रमिकत्वं
स्यात्तत: प्रमेयस्य ॥१४॥

कालतत्त्वमेव क्रमरूपताया अवभासस्य भित्तिभूतम् । स च काल: सम्बन्धविशेषकलनात्मक: । तत: क्रमावभासकं तत्त्वं कालतत्त्वम् । पूर्वापरक्रमकल्पनैव कालस्य व्यावहारिकं स्वरूपम् । न च स्वात्मनि किमपि पूर्वमपरं वा । परं शिव एव वक्ष्यमाणयाऽपोहनशक्त्या स्वात्मनि सङ्कोचमवभासयति । सङ्कोचावभासभित्तौ सम्बन्धरूपतायाः कल्पना क्रियते मायीयेन प्रमात्रा । तत्र क्रियावैचित्र्यमाश्रित्य या पूर्वापरत्वकल्पना विधीयते, स एव कालकृत: क्रम: । अहमिति प्रमातृतयाभिमन्यमानस्य देहप्राणादे: पूर्वं स्वात्मविषये—आसम्, अस्मि, भविष्यामीति कल्पना कालक्रम: । तत: प्रमाता स्वयं कालक्रमेण परिच्छिन्न: सन् प्रमेयेऽपि तं क्रमं सञ्चारयति—आसीद्, अस्ति, भविष्यतीदमिति । सूर्योदयास्तमयादिना चन्द्रसूर्ययो राशिसङ्क्रमणादिना च नियतेन कालक्रमेणानियतक्रमं जीवलोकव्यवहारं प्रमाता परिमिणोति दिनं, मासं, वर्षं वातिष्ठदित्यादि ।

किञ्चिन्मात्रं ज्ञातुं कर्तुं वा
यत्त्विहापि सामर्थ्यम् ।
सङ्कोचशालिनस्ते पुंसो
विद्या कला च बोद्धव्ये ॥१५॥

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

इहेति पुंस्तत्त्वरूपे जीवभावे। किञ्चिदेव, न सर्वं ज्ञातुं कर्तुं वा जीवस्य सामर्थ्यम्। तत्र तस्य किञ्चिज्ज्ञत्वं विद्या अशुद्धविद्येति प्रसिद्धा, किञ्चित्कर्तृत्वञ्च कला। ज्ञानशक्तिसङ्कोचोऽशुद्धविद्या क्रियाशक्तिसङ्कोचश्च कला। कर्मफलभोगादिसाधनाय माया हृतसर्वस्वाय जीवाय पुनः किञ्चिन्मात्रं ज्ञातुं कर्तुञ्च यन्मनाक् सामर्थ्यं प्रददाति तदेव तस्याशुद्धविद्या कला च।

निजदेहादौ तस्य प्रेयसि
　　वस्तुनि च योऽस्त्यभिष्वङ्गः।
सुगुणारोपणमय इव रागः
　　पुंसस्त्वसौ समाख्यातः ॥१६॥

जीवो निजदेहादि तस्य च प्रेयोभूतं पदार्थजातं पुत्रदारादि धनधान्यादि वात्यन्तं गुणमण्डितं मनुते। असौ तस्य रागः। द्वेषविरुद्धोऽवैराग्यरूपो वा रागस्तु बुद्धिधर्मः। रागतत्त्वं तत उत्तीर्णं प्रमेयविशेषेषु गुणारोपणमयमभिष्वङ्गस्वरूपम्। जीर्णेन्द्रियस्य वृद्धस्य वा विरक्तस्य वा यतेः प्रमदायां वैराग्यप्रतिद्वन्द्वी रागो न भवति। परमभिष्वङ्गरूपं रागतत्त्वं भवत्येव, येन प्रमदायाः सौन्दर्यं माहात्म्ययुक्तं मनुते। तत एव शङ्कराचार्यसदृशैरपि यतिभिः स्तुतं प्रशस्तञ्च ललनासौन्दर्यं देवीस्तुतौ। ततो वैराग्याभावेनापि रागतत्त्वं न चरितार्थम्। यतो वैराग्यविषयेऽपि क्वचिदभिष्वङ्गो दृश्यते, यथा सन्न्यासिनाम्। इदं मे देहादि सदैव भूयादेव मा कदाचिन्मा भूयादित्येवम्प्रकारोऽभिष्वङ्गोऽपि रागतत्त्वस्यैव विजृम्भितम्।

कर्त्तव्ये बोद्धव्ये सर्वत्र
　　यया नियम्यते नियमैः।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

नियतिरसौ पुरुषस्य स्वातन्त्र्य–
　　निरोधिनो प्रभोः शक्तिः ॥१७॥

इदमेव किमपि वस्तु, अनेनैव च विधानेन ज्ञातुं वा कर्तुं वा शक्तो जीवो नान्यत्, इत्थमेव च तत्र शक्तो नान्यथा; इत्येवं जीवस्य ज्ञत्वकर्तृत्वयोर्नियामिका प्रभोः शक्तिर्नियतिः । तस्याभिव्यक्तिर्नियति-तत्त्वम् । रागस्यापीयं नियामिका । नियतेरेव प्रभावेणायं पशुरत्रैव रक्तो नान्यत्र, इदमेव चास्य प्रेयो नान्यदिति । सर्वोऽपि लोकव्यवहार-नियामकः कार्य-कारणभावो नियत्या नियमितः । प्रमातुः स्वातन्त्र्यस्यातितरां विघातिनी नियतिः । इयमेव जीवं संसृतिसागरेषु भ्रामयति । यतः कर्मफलभोगनियमोऽस्या एव विजृम्भितम् ।

एतत्कृतसङ्कोचो नानायोनिषु
　　पुमान् स संसरति ।
सुखदुःखभोगभागी स्वर्गे
　　निरये च मर्त्यलोके च ॥१८॥

पुंस्तत्त्वमिदं द्वादशम् । जातावत्रैकवचनम् ।

पतिरिति विद्याशक्त्योर्व्यवहारो
　　मातरीह विख्यातः ।
मायायां पुनरणुरिति पशुरिति
　　जीव इति चास्ति संसारे ॥१९॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

वस्तुतः एक एव प्रमाता शिवः। स एव विद्याभूमिकायां मन्त्रेश्वर-मन्त्रमहेश्वर-प्रमातृतया प्रमेयांशं स्वशरीरकल्पतया पश्यन्, शक्तिभूमिकायां चाकलप्रमातृतया सर्वं सर्वथा स्वात्मतयैव विमृशन् पतिरित्युच्यते। स एव मायाभूमिकायां भावजातं स्वस्माद् भिन्नतया पश्यन् पशुरित्याख्यायते। संसारे इति संसृतौ। तेन संसृतेरुत्तीर्णाः विज्ञानाकलाः भेददर्शिनोऽपि पतिप्राया एव, मन्त्रप्रमातारस्तु पतय एव। प्रलयाकलाः कमपि कालं संसरणरहिता अपि कल्पान्तरे संसृतिभागिनः सन्तः पशव एव। मायीयाः सकलाख्याः प्रमातारस्तु स्पष्टं पशवः।

अवरोहलीलयेत्थं स्वल्पज्ञो
जीव एकतो भवति।
परमेश्वरस्त्वपरतः प्रकृतिः
करणानि कार्यवर्गश्च ॥२०॥

प्रकृतितत्त्वं कार्यकरणतत्त्वानां सामान्यं स्वरूपम्। तदेव कार्यकरणात्मकतया परिणमते सृष्टिकाले, संहारे च कार्यकरणवर्गौ तत्रैव विलीयेते। मूलप्रकृतिदशायां च तस्य स्वरूपं सामान्येन "इदमिति" यः प्रमेयांशो जीवकृतस्य विमर्शस्य तदिदं त्रयोदशं तत्त्वम्। करण-तत्त्वानि तावत् त्रयोदशसंख्यानि। कार्यतत्त्वानि पुनर्दश। तानि च सांख्यशास्त्रेऽपि सुप्रसिद्धानीति न विस्तरतोऽत्र प्रतिपादितानि। तदित्थं मेलनया तत्त्वसंख्या षट्त्रिंशत्! स्वल्पज्ञत्वमत्र स्वल्पकर्तृत्वस्या-प्युपलक्षकम्।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

एवं भवंश्च देवो नैव

च्यवते मनागपि स्वीयात् ।

पूर्णात् परमशिवत्वाद्

यत्तच्छैवं परं स्वतन्त्रत्वम् ॥२१॥

क्षीरं हि दधिभावेनावभासमानं सन्न क्षीरतयावभासते, मृच्च घटादिभावेनावभासमाना सती मृत्तयावभासमानापि न लेपनशोधनाद्युपयोगितया भासते । ततोऽयं तयोः परिणाम इत्युच्यते । परमशिवस्तु परिपूर्णस्वातन्त्र्यमहिम्ना तत्त्वषट्त्रिंशकतयावभासमानोऽपि सर्वकालं शुद्धसंविद्रूपतया पारमैश्वर्यस्वभावतया चापि सततं प्रकाशमान एवास्ते । परमेश्वरतावभासमध्ये एव तत्त्वव्रातावभासोदयस्तल्लयश्च तदिच्छामात्रतः प्रतिबिम्बकल्पतया समुल्लसति । स एवैष दर्शनान्तरादृष्टः परिणामादिवादविलक्षणः पारमेश्वरस्वातन्त्र्यविलासो नाम शैवदर्शनस्याधारभूतो मुख्यः सिद्धान्तः ।

अन्तःकरणं त्रिविधं बाह्यं

करणं च दशविधं प्रथितम् ।

सूक्ष्मस्थूलविभेदाद् द्विविधं

कार्यं च पञ्चधा भिन्नम् ॥२२॥

करणानि विद्योपयोगीनि कलोपयोगीनि च सामर्थ्यविशेषरूपाणि जीवस्य । तानि पुनर्बाह्यकरणान्यन्तःकरणानि च । तयोर्मध्ये अभि-

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

मननसामर्थ्यरूपोऽहङ्कारः, विशेषविशेषप्रमेयाणां विषये तत्तन्नामरूप-निश्चायिका अध्यवसायरूपा बुद्धिः। विषये विषये विविधनामरूपसङ्कल्प-नोपयोगि मनः, इति त्रीण्यन्तःकरणानि। बाह्यकरणेषु विद्योपयोगीनि पञ्च ज्ञानेन्द्रियाणि कलोपयोगीनि च पञ्च कर्मेन्द्रियाणि। ज्ञानेन्द्रियाणि तावच्छब्दाद्यर्थंप्रतिबिम्बग्राहीणि-श्रोत्र-त्वक्-चक्षू-रसना-घ्राणाख्यानि त्वच-मेकां विहाय शरीरे नियतस्थानानि। त्वक् च सर्वस्मिन्नपि शरीरेऽन्त-र्बहिर्वर्तिनी। कर्मेन्द्रियाण्यपि पञ्च वचन-ग्रहण-चलन-विसर्जनानन्दनसामर्थ्य-रूपाणि साधनानि क्रमेण वाक्पाणिपादपायूपस्थाख्यानि यथायथं शरीरे बहुष्वङ्गेषु वर्तमानानि। कार्यतत्त्वानि ग्राह्यविषयरूपाणि। तत्र सूक्ष्मो विषयस्तन्मात्रपञ्चकं शब्द-स्पर्श-रूप-रस-गन्धात्मकम्, स्थूलश्च विषयो भूतपञ्चकम् आकाश-वायु-वह्नि-जल-पृथ्वी-स्वरूपम्। प्रथितमिति प्रसिद्धं सांख्यादिशास्त्रेषु। ततो नेह विस्तरतः प्रतिपादितम्।

कार्यकरणवर्गस्याविभागरूपा
तु या दशा कापि।
सैव निगदिता प्रकृतिः प्रधानमिति
चाप्युदाहृता त्रिगुणा ॥२३॥

पतिप्रमाता प्रमेयं विश्वं सामान्याकारेणैव "इदम्" इत्येवंस्वरूपमेव संवेत्ति। पशुरपि स्थूलसृष्टेः प्राक् विश्वं प्रमेयं सामान्याकारमेव "इदम्" इत्येव संवेत्ति। परमसौ स्वस्माद् भिन्नमिदं संवेत्ति। पतिः पुनर्निजाङ्ग-कल्पतयैव। पशोस्तत्सामान्याकारं प्रमेयं विश्वं प्रधानमिति, मूलप्रकृतिरिति चोच्यते। विशेषाकारञ्च पशोः प्रमेयं स्थूलसृष्टौ सत्यां पाञ्चभौतिकं विषयजातम्। प्रकृतिः सत्त्वरजस्तमसां त्रयाणां गुणानां साम्यावस्था।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

पत्युर्निजाङ्गकल्पे ज्ञानं
विश्वत्र भावजाते यत् ।
सङ्कोचशालिनस्तत् सत्त्वं
तु पशोः क्रिया तथैव रजः ॥२४॥

स्वाङ्गकल्पस्य भावजातस्य विषये या ज्ञानशक्तिः पत्युः, सैव सङ्कोचरसे पशुभावे पशोः सत्त्वगुणः । या चैवंविधा पत्युः क्रियाशक्तिः सैव पशो रजः ।

पत्युर्मायाशक्तिर्या सैव
पशोस्तमोगुणो गदितः ।
भेदरसे पशुभावे गुणत्वमेषां
परं न शक्तित्वम् ॥२५॥

यासौ पत्युर्भेदावभासनोन्मुखतारूपा परा मायाशक्तिः, सैव पशुदशायामाख्यानतात्मकं घनीभावं जडत्वं चापन्ना सती तस्य पशोस्तमोगुणो भवति । शक्तिशक्तिमतोर्ह्यभेदः । पशुभूमिका तु भेदैकरसा । भेद एव तत्र रस्यते तद्दशावतीर्णेन प्रमात्रा । ततोऽमीषां सत्त्वादीनां पशोर्गुणत्वमेव न शक्तित्वम् । गुणत्वेनैव पशोः सकाशाद् भेदेनावभासः सत्त्वादीनाम् । सत्त्वादिगुणानां मूलभूतवस्तुतत्त्वदृष्ट्या तेषां व्याख्यानमेतत् ।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

सत्तानन्दः पत्युः सदास्त्य-

विच्छिन्न एव यः स पशोः ।

अस्ति हि यत्तत् सत्त्वं

तस्याभावस्तमो रजो मिश्रम् ॥२६॥

सत्त्वं-प्रकाशसुखरूपम्, रजो हि प्रवृत्तिदुःखरूपम्, तमश्चाप्रकाश-मोहरूपम् । तथाहि—पशोरपि हर्षादिदशासु यस्सत्तानन्दप्रकाशः स तस्य सत्त्वम् । सुप्तमूर्च्छादिदशासु यस्तस्य सत्तानन्दप्रकाशाभावः स तस्य तमः । प्रियपुत्रादेरात्मदेह देर्वा रोगादिग्रस्तत्वेन दर्शने स सत्तानन्दप्रकाशः केनाप्यंशेनास्ति केनापि च नास्ति । रोगादिग्रस्तत्वेनानभीष्टेन रूपेण सोऽस्ति, कल्याणयुक्तत्वेनाभीष्टेन रूपेण च नास्ति । इत्थं सत्तानन्दप्रकाशस्य भावाभावयोरिदं मिश्रं रूपं सत्त्वतमसोः परस्परसंभिन्नं स्वरूपम् । इदमेव रजः । अस्य मिश्रस्वभावत्वमेव चाञ्चल्यरूपस्य दुःखत्वस्य बीजम् । सत्तानन्दे नैतच्चाञ्चल्यम् । तत्र तु सत्तानन्दे विश्रान्तिः । तत्र यन्मनाक् चाञ्चल्यं तत्त्वानन्दात्मकस्पन्दस्वरूपम् । तद् आनन्द एव न दुःखम् । सत्तानन्दाभावस्याभावरूपत्वादेव तत्र मोहमात्रं न चाञ्चल्यम्, नाप्यानन्दः । व्यवहारे सत्त्वादीनामभिव्यक्तिप्रकारदृष्ट्या तेषां स्वरूपस्य व्याख्यानमेतत् ।

अत एव सुखं सत्त्वं तमश्च

मोहोऽस्त्यभावरूपत्वात् ।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

मिश्रं रजः प्रकाशा-

प्रकाशसम्भेदकं चलं दुःखम् ॥२७॥

स्वसत्तानन्दप्रकाशत्वेन सत्त्वं सुखात्मकम् । तदभावरूपत्वेन तमो मोहात्मकम् । सत्तानन्दप्रकाशाप्रकाशात्मकत्वेन सत्त्वतमसोर्मिश्रं रूपं रजो दुःखात्मकम् । मूलतो गुणत्रयं वस्तुतः पुरुषस्यैव । स एव यतो निजमिदमात्मकं सामान्यं प्रमेयं सुखदुःखमोहदृष्टया पश्यति, ततो तदपि गुणत्रयात्मकमेव । त्रिगुणत्वं ह्येवं प्रमेयतत्त्वे पुरुषेणारोपितमेव वेदितव्यम् । एव शैवः सिद्धान्तविशेषः शैव एव, नान्येषु शास्त्रेषु दृष्टः क्वापि ।

पुंसः पृथिवीं यावत् सांख्ये

शास्त्रे स्मृतानि तत्त्वानि ।

माहेश्वरे तु शास्त्रे कञ्चुक-

षट्कं शिवादयश्चापि ॥२८॥

शैवे शास्त्रे माया-कला-विद्या-राग-नियतिकालाख्यानि षट् कञ्चुकतत्त्वानि, शिव-शक्ति-सदाशिवेश्वर-विद्याख्यानि च पञ्चोत्तर-तत्त्वान्यपराणीति सर्वाणि षट्त्रिंशत् । प्रपञ्चस्य वर्गीकरणमात्रमिदं शिष्यजनसम्बोधार्थम् । तदुत्तमस्याधिकारिणः कृते एकमेव तत्त्वं शिव एव । मध्यमस्य कृते शिवः, शक्तिः, नरो (जडतत्त्ववर्गः) इति त्रीण्येव तत्त्वानि । सामान्यसाधकानां कृते षट्त्रिंशत् तत्त्वानि । तेषां सर्वेषां

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

तत्त्वानां समष्टिः परमशिवः सप्तत्रिंशं तत्त्वम्। तच्च तत्त्वाध्वधारणायां साक्षिभावे स्थितं न स्वयं धारणाविषयतामापद्यते। ततस्तत्त्वसंख्या या प्रसिद्धा सा षट्त्रिंशदेवेति।

संयोगादिर्द्रव्यं सामान्यं
कालदिक्क्रियाप्रभृति।
सम्बन्धरूपमखिलं भेदा-
भेदात्मकं परं नान्यत् ॥२९॥

प्रभृतिपदेन परिगणनीयतया द्रव्यगुणकर्माणि विशेषसमवाया-भावाश्चेति कणादसम्मताः पदार्थाः ग्राह्याः। ते सर्वेऽपि प्रायः सम्बन्धरूपा एव। सम्बन्धश्चैकत्र विषये भेदाभेदयोः कल्पनामात्रम्। तद् यथा राजा पुरुषश्च पृथक् पृथग् भिन्नौ। "राजपुरुषः" इति तयोरभेदकल्पनावभासः। स एव सम्बन्धः षष्ठीप्रयोगबीजभूतः। परमिति केवलम्। सम्बन्धः स्वयमवस्तुभूतः सन् प्रमातुः कल्पनामात्रत्वं नातिरिच्यते। द्रव्यमत्रावयविद्रव्यमभिप्रेतम्। अवयवित्वं तत्र सम्बन्धा-त्मकमेव। एवं सामान्यादीन्यपि।

भेदः कथं नु पूर्णे भाति
तु विच्छेदभासनान्नूनम्।
सेयमपोहनशक्तिः शम्भो-
र्विच्छेदभासनोन्मुखता ॥३०॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

परिपूर्णे शिवे भेदो न सम्भवति। ततो भेदमवबिभासयिषुर्भग-वाञ्छिवः पूर्वं स्वस्मिन्नेवाभिन्ने स्वरूपे प्रतिबिम्बकल्पतया सङ्कोचमव-भासयति। तेन संवित् संवेद्ययोः परस्परं विच्छेदस्यावभासो भवति। संवेद्यं चापि संवेद्यान्तराद् विच्छिन्नमवभासते। सङ्कुचिता जीवसंविदपि तथैव संविदन्तरात्। इति बहुप्रकारकोऽयं भेदावभासो विच्छेदमूलक एव, न च विच्छेदः कथमपि सम्भवति। सर्वस्य पूर्णशिवत्वात्, शिवस्य चाविच्छिन्नत्वात्। इति तच्छक्त्या विच्छेदस्यावभासमात्रमेव भवति। तदिदं विच्छेदनावभासनसामर्थ्यं विच्छेदनावभासनं प्रत्योन्मुख्यं च शिवस्यैव शक्तिविशेषः। सैव तस्यापोहनाख्या शक्तिः, सैव सांसारिकव्यवहार-जातभित्तिभूता, यतस्तदुपर्येव ज्ञातृ-ज्ञेय-भावो वा स्मर्तृस्मार्यभावोऽपि वा सर्वोऽपि विश्रान्तस्तिष्ठति, चलति च निराबाधगत्या।

भेदेऽवभासमाने ज्ञाता ज्ञेयं च
भासते हि यया।
सा ज्ञानशक्तिरस्याख्याता
शास्त्रेष्वनन्तवैचित्र्या ॥३१॥

एकस्मिन् पूर्णे किं ज्ञेयं किं वा ज्ञातृ। परमपोहनशक्त्या भेदस्याव-भासे सिद्धे सति ज्ञातृज्ञेयभावोऽपि सम्भवति। तथापि कथमिदमेव किमपि शरीरप्राणादि ज्ञातृ, इदमेव च विशेषनीलसुखादि तस्य ज्ञेयं, नान्यत्? तदियं तस्यैव भगवतः कापि शक्तिर्यद्वशाद्विश्वभाव-राशिमध्यात् किञ्चिदेव कस्यचिदेव ज्ञेयतामापद्यते कदाचित्। तदित्थमनन्तप्रकारतया सुविचित्रज्ञातृज्ञेयभावसमुल्लासकारिणी भगवतः

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

शक्तिस्तस्यान्या ज्ञानशक्तिः। इयं विश्वज्ञानमयव्यवहारभित्तिभूता तस्य शक्तिः। सदाशिवतत्त्वावभासिका ज्ञानशक्तिस्त्वपरा परमेश्वरस्यान्तरङ्गशक्तिमध्ये पूर्वं गणिता।

स्मर्ता स्मार्यं च यया बहुधा
भातीह सा प्रभोः शक्तिः।
स्मृतिरिति नाम्ना ख्याता
तिस्रो व्यवहारभित्तिभूता हि ॥३२॥

स्मृतिव्यवहारस्य मूलभूतमनुभवज्ञानम्। पूर्वानुभवजनितसंस्कारोद्बोधवशाज्जीवानां स्मृतिरुदेति। ततोऽनन्तानुभवसंस्काराणां मध्ये कस्यचिज्जीवस्य कदाचिदेव कस्यचिदेव संस्कारविशेषस्योद्बोधेन किञ्चिदेव वस्तु स्मार्यं भवतीत्यत्र सुविचित्रे स्मृतिव्यवहारे नियामिका या प्रभोः शक्तिर्विजृम्भते सा तस्य स्मृतिशक्तिः। स्मृत्यायत्त एव सर्वोऽपि जीवलोकव्यवहारः। स्मृतिरनुभवज्ञानायत्ता। ततः स्मृतिशक्तेराधारभूता ज्ञानशक्तिः। उभयानुग्राहिणी चापोहनशक्तिः। इत्थमेतास्तिस्रः शिवस्य व्यावहारिक्यः शक्तयो विश्वव्यवहाराधारभूताः।

परमेश्वरः परा वाक् कथितः
सिद्धैर्विमर्शसारत्वात्।
ज्ञप्तिमये व्यवहारे सर्वत्र
विमर्श एव वाक्तत्त्वम् ॥३३॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

परमेश्वरस्य स्वभावभूता प्रत्यवमर्शस्वरूपा हि चितिः पूर्णत्वात्परा, वक्ति-विश्वमभिलपति प्रत्यवमर्शेनेति वाक् । आन्तरोऽयमभिलापोऽन्तर्मुख-शिरोनिर्देशकल्पशब्दनस्वभावः, परिपूर्णाहंविमर्शात्मकः । व्यवहारेऽपि वाग् विमर्शप्राणैव । घट इति योऽर्थावबोधकः स्फोटात्मकः शब्दो, ध्वन्यात्मकेन शब्देनाभिव्यङ्ग्यः, स घटरूपस्य स्थूलबुध्नोदराकारद्रव्य-विशेषस्य विमर्शनात्मक एव । ततो विमर्श एव वाचः सारभूतं तत्त्वम् ।

भेदाभेददशायां क्रमरहिता

वाङ् मता च पश्यन्ती ।

बुद्धौ च मध्यमोक्ता वाचि

बहिर्वैखरी समाख्याता ॥३४॥

विशेषाकारादिक्रमकल्पनाशून्यस्य विश्वस्यानुन्मीलितस्येव सामान्याकारस्य चित्रस्य यो विमर्शः सदाशिवेश्वरभुवि, सैव पश्यन्ती वाक् । स्फुटतया बुद्धावुल्लिखितो नामरूपाभाससम्भिन्नः क्रमरूपतानुविद्धो यो वस्तुविमर्शः, सा मध्यमा वाक् । चिन्तनध्यानादयो व्यापारा मध्यमया वाचा विधीयन्ते । देवादीनां सूक्ष्मशरीरधारिणां प्राणिनां वाङ् मध्यमैव । मर्त्यानां पुनः प्राणिनां मुख्या वाग्वैखरी । सा मुखेनोच्चार्यते श्रोत्रेण च गृह्यते । सापि स्फुटं सक्रमैव ।

अत्रकारिका—३४ पूर्वाभिः सह—६४

इति श्रीस्वातन्त्र्यदर्पणे सटिप्पणे
षट्त्रिंशत्तत्त्वनिरूपणाख्यमाह्निकं
तृतीयम् ॥

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अथ

चतुर्थमाह्निकम्

# माहेश्वर्यनिरूपणम्

स्वविलासेन शिवस्य
स्वभावस्वषयेऽथ विस्मृतिर्बन्धः ।
गुरुशास्त्रोपासनया प्रत्यवमर्श-
स्मृतिः पुनर्मोक्षः ॥१॥

स्वो भावः—स्वं शिवत्वम् । तस्य विस्मृतौ सत्यामेव जीवत्वावभासः । प्रतीपम्—आत्माभिमुख्येनावमर्शः प्रत्यवमर्शः, तद्रूपा या स्वस्वभावविषया स्मृतिः सैव मुक्तिः—जीवन्मुक्तिरिति ; स एव परमेश्वरोऽहमिति-निश्चयरूपा स्मृतिरिति, एषैव प्रत्यभिज्ञा स्वात्मनः ।



CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

एवं कस्य नु बन्धः कस्य
च मुक्तिः कुतश्च को मोच्यः ।
चित्रं शिवमयमखिलं बन्धो
मोक्षः शिवस्य शिवतेयम् ॥२॥

बन्धमोक्षौ तु लीलाविलासरूपावेव । सर्वस्य शिवत्वे न कस्यापि वस्तुतो बन्धः । बन्धाभावे न कस्यापि मुक्तिः । बन्धमोक्षलीलावभासनमेव हि शिवस्य शिवत्वम् । चेद् बन्धमोक्षवैचित्र्यावभासनशक्तिः, तदवभासने चोन्मुखता शिवस्य स्वभावो नाभविष्यत् तर्हि शिवः शिवो नाभविष्यत् ॥

बन्धोऽवरोहलीला मोक्ष-
श्चारोहखेलनं शम्भोः ।
कलनोभयस्य चित्रं
माहैश्वर्यं परं स्वतन्त्रत्वम् ॥३॥

अकलात्सकलं यावत् सोपानक्रमेण वाऽक्रमेणापि वा योऽवरोहलीलाभिनयः ; स एव बन्धः ; तथाविध एवारोहलीलाभिनयो मोक्षः । उभयं चेदं सुविचित्रं माहेश्वर्यंविजृम्भितं परशिवस्य । इयमेव तस्य कलनेत्युच्यते आगमेषु । कलनापरत्वं तस्य कालीरूपता । सैव तस्य परिपूर्णं स्वातन्त्र्यम् ।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

षट्त्रिंशत्तत्त्वमये क्रीडन्

विश्वत्र भावजातेऽसौ ।

परमेश्वरः स्वतन्त्रः स्वानन्दं

विन्दतीव खलु कमपि ॥४॥

न तु सत्यं विन्दति । अप्राप्तस्यैव प्राप्तिर्विन्दनम् । स्वानन्दस्तस्य स्वभावभूतो नैवाप्राप्तः कोऽपि विशेषः, तत एवात्र "इव" इति पदस्य प्रयोगः । वस्तुतः आनन्दमूला, आनन्दचमत्कारावसाना, सततमानन्दात्मिकैवेयं कलनात्मिका लीला परमेश्वरस्य ।

स्वस्मिँस्समतलफलके

स्वेनैव स्निग्धवर्णविभवेन ।

रचयञ्छिवः स्वतन्त्रः

शक्तिघनो विश्वचित्रमति चित्रम् ॥५॥

कवयँश्च विश्वकाव्यं

नटयँश्चेदं सदा जगन्नाट्यम् ।

परमेश्वरो विजयते रसयन्

सततं निजं रसं कमपि ॥६॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

परमेश्वरस्य स्वातन्त्र्यलीलाविलास उपमातुमशक्योऽपि सम्बोधनार्थं चित्रकलया, नाट्यकलया, काव्यकलया च यथाकथञ्चिदुपमीयते । अस्या विश्वलीलायाः फलं तस्य निजैश्वर्याभिमुख्येनाभिव्यज्यमानो जगदानन्द एव यः परमेश्वरतायाः साक्षाच्चमत्कारः । काव्यनाट्यादिकलाविरचने स्वप्नसङ्कल्पमनोराज्यादौ च जीवोऽपि तत्स्वभाव एव, परं परिमितः । परमेश्वरस्य कलना पुनरपरिमिताऽनवच्छिन्ना च ।

कथमिव चिन्मात्रोऽसौ
यायाज्जडतां परां धरादिमयीम् ।
अद्वैतमात्ररूपो यायाद् द्वैतं
कथं नु सुविचित्रम् ॥७॥

असम्भवप्रायमेतत् सर्वमपि । तत् कथं घटते—इत्याश्चर्याभिव्यक्ति-परोऽयं प्रश्नः ।

आनन्दमात्रमूर्तिर्भुञ्जीत
कथं भवं महादुःखम् ।
संसारादुत्तीर्णः कथमिव
कष्टं स संसरेन्नु शिवः ॥८॥

अविकल्पश्च सदाऽसौ
विकल्पमयतां कथं पुनर्यायात् ।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अणुतां व्रजेच्च पूर्णः कथमिव
मलिनो भवेत्सदाशुद्धः ॥९॥

एतदपि सर्वमसम्भवप्रायमेवेति पूर्ववदिमे प्रश्नाः ।

परमेतत्स्वातन्त्र्यं तस्या-
घटनीयघटनसामर्थ्यम् ।
एषैव तस्य शक्तिर्यया
शिवत्वं स निर्वहेत् परमम् ॥१०॥

परं—केवलम् स्वातन्त्र्यमेवेदं परमशिवस्य येन सर्वमपीदमसम्भवमपि तदिच्छया दर्पणनगरन्यायेन सम्भवति प्रतिबिम्बकल्पतया । किञ्च परम् उत्कृष्टतममिदं पारमेश्वरं स्वातन्त्र्यमिन्द्रोपेन्द्रादीनां स्वातन्त्र्यस्यापेक्षया । ते हि नियतिशक्त्या नियमितम्, अत एव सङ्कुचितमेव स्वातन्त्र्यम् उपभुञ्जते, परमशिवः पुनः सर्वथाऽनवच्छिन्नं परिपूर्णम् । एतद् दुर्घटघटनापटीयस्त्व-मेव तस्य शिवत्वप्रयोजकम् । इयमेव तस्य परमेश्वरताख्या शक्तिः । अनया विना शून्यजडप्रायत्वमभविष्यत्तस्य ।

एतन्महेश्वरत्वं वैलक्षण्यं
शिवस्य यच्छून्यात् ।
भूषणमेतन्निखिलं
दूषणमिव सम्मतं परं बालैः ॥११॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

वालैः —बौद्धार्हतचार्वाकाद्यैः, आस्तिकैरप्यजातवादिभिः । ते ह्येतस्मिन् स्वातन्त्र्ये दूषणत्वशङ्कयैवाविद्योपाधिप्रभावेण भासमानमिदं सर्वं मिथ्येति ब्रुवाणाः स्वात्मनो लोकांश्च वञ्चयन्तोऽपि न लज्जन्ते । ·दिदमपि तस्यैव भगवतः स्वातन्त्र्यविजृम्भितम् । तस्यैव माया विदुषोऽपि तान् मोहयन्ती तथा कारयति ।

पञ्चविधत्वं शास्त्रे
माहैश्वर्यस्य सम्मतं शैवे ।
सृष्टिस्थितिसंहाराः
अपिधानमनुग्रहश्च तद्भेदाः ॥१२॥

स्वात्ममात्ररूपस्य विश्वस्य प्रतिबिम्बकल्पतया स्वात्मन्येव प्रमेयतया भिन्नत्वेन-अनात्मत्वेन चावभासनं सृष्टिः, न पुनरसतो वस्तुनः समुत्पादनम् । प्रमेयतायामेव सुचिरमवस्थापनं तस्य स्थितिः । महाप्रलये सर्वस्यापि प्रमेयजातस्य परिपूर्णप्रमातृतायां विलापनम्-आत्मसात्करणं संहारः । मध्येऽपि कार्यजातानां निजे निजे उपादानकारणजाते लयः संहार एव । त्रिष्वप्येतेषु भगवत ऐश्वर्येषु विचित्रतया चलत्सु तस्य स्वस्य चिदानन्दघनस्य सर्वथा स्वतन्त्रस्य परमेश्वरत्वाख्यस्य परिपूर्णस्य स्वरूपस्याधिकाधिकं गोपनं यत् यच्च जीवानामज्ञानगर्त्तेष्वधोऽधः पातनं तत् पिधानाख्यमैश्वर्यम् । पिधानमेवापिधानम् । गुरुशास्त्रोपासनोपायेन तस्य परिपूर्णस्य स्वरूपस्य प्रत्यभिज्ञया पुनः प्रकाशनमनुग्रहाख्यमैश्वर्यं परमेश्वरस्य ॥

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

पञ्चेमानि हि शम्भोः
कृत्यानि सदा निरर्गलानीह ।
प्रचलन्ति भावजाते
सततं सुविचित्ररूपया शक्त्या ॥१३॥

भगवत ऐश्वर्यस्यैते पञ्च प्रकाराः शास्त्रे पञ्चकृत्यानीत्युच्यन्ते । एते च पञ्चापि सततं प्रचलन्त्येव । क्षणे क्षणे केषाञ्चित्सृष्टिः, केषाञ्चित्संहारः, केषामपि स्थितिः, केषुचित्तिरोधानाख्यं पिधानं यन्निग्रह इत्यप्युच्यते, केषुचिच्चानुग्रहः, पारमैश्वर्यां स्वातन्त्र्यविलासलीलायां प्रचलन्त्येव । न तानि निरोद्धुं शक्यन्ते केनापीति निरर्गलानीति ।

भोगानां दासत्वं भज-
मानोऽधः पतन् पशुर्नित्यम् ।
परमेश्वरं निषेधेन्निन्दे-
च्छास्त्रं गुरुं च यन्मोहात् ॥१४॥

स्वस्यैवैतच्छम्भोः पिधान-
कृत्यस्य जृम्भितं नान्यत् ।
स्वस्वातन्त्र्यमहिम्ना
तिरोहितं तेन यन्निजं तत्त्वम ॥१५॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

सृष्टयादीनि त्रीणि पारमेश्वराणि कृत्यानि शास्त्रान्तरेष्वप्युक्तानि सर्वस्मिल्लोके सुप्रसिद्धानि। चतुर्थस्य तु पिधानकृत्यस्याप्रसिद्धप्रायत्वेनात्र विस्तार्य प्रतिपादनं कृतम्। अनेनैव कारणेनाग्रेऽनुग्रहकृत्यस्याप्येवमेव वर्णनं कृतम्। तिरोहितम् अधिकमधिकमज्ञानगहने प्रक्षिप्तमिति।

सुचिरं संसृत्यैवं कदाचि-
दालम्ब्य शास्त्रगुरुवाक्यम्।
प्रत्यभिजानाति निजं
शिवस्वभावं स्वनुग्रहाच्छैवात्॥१६॥

पारमेश्वरादनुग्रहादेव जीवः गुरुमभिगच्छति शास्त्रे च रुचिमान् भवति। स्वनुग्रहः—सुष्ठ्वनुग्रहः, तीव्रोऽनुग्रहः। तेनैव भवति सत्वरं पूर्णा स्वरूपप्रत्यभिज्ञा।

अत्र कारिकाः १६　　पूर्वाभिः सह=८०

इति श्रीस्वातन्त्र्यदर्पणे सटिप्पणे
माहेश्वर्यनिरूपणाख्यमाह्निकं
चतुर्थम्।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अथ

पञ्चममाह्निकम्

# नास्तिकवादपरीक्षणम्

निग्रहशक्तेर्महिमा
नास्तिकवादादिकलिकलुषवृद्धिः ।
अनया महेशशक्त्या
निगृहीता मानवा वदन्तीत्थम् ॥१॥

नास्तिकादिवादानां कलिकलुषादीनां च वृद्धिर्भगवत एव निग्रहाख्य-पिधानकृत्यस्य विकासस्य प्रभावाद् भवति। तदिदमप्यैश्वर्यविजृम्भितमेव भगवतो महेश्वरस्य।

देहगुणश्चैतन्यं देहादति-
रिच्यते न कोऽप्यात्मा ।



CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

नवास्ति कश्चिदीशी
नापि पुनर्जन्मपुण्यपापादि ॥२॥

प्राचीनाश्चर्वाका वर्तमानाश्च भौतिकविज्ञानवादिनः साम्यवादिनश्चात्मनः, ईश्वरस्य, धर्माधर्मयोः, कर्मफलनियमस्य च सत्तां निषेधन्ति। शरीरमेव तु आत्मनं मन्यन्ते, न तदतिरिक्तं जीवम्। सांख्यादयः ईश्वरस्य सत्तामधिकारञ्चापलपन्तोऽपि कर्मफलभोगनियमं, पुण्यपापादि, स्वर्निरयादि च स्वीकुर्वन्ति। ततस्तेऽप्यास्तिकेष्वेव गण्यन्ते। बौद्धार्हतादयो वेदादीनां प्रामाण्यमस्वीकुर्वन्तोऽप्यर्धनास्तिका एव, न पूर्णनास्तिकाः, यतस्तेऽपि पुण्यपापादिकर्मफलभोगं स्वीकुर्वन्ति। अत्र चाह्निके परिपूर्णस्यैव नास्तिकवादस्य परीक्षणं विषयः।

स्वयमेव भूतजातं
विचित्रभुवनादिरूपतां धत्ते।
तत्रापि मनुजदेहाः
सर्वश्रेष्ठा विनैव सन्देहम् ॥३॥

शरीरभुवनभावास्तावत् पञ्चभूतानां स्वत एव सम्भविनो परिणामाः। न तेषां परिणामकः कोऽपीश्वरादिः॥

अत एव मनुजसौख्यं
जगतो लक्ष्यं प्रमुख्यमिति वेद्यम्।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

सौख्याय मनुष्याणामधिकारे
निर्विशेषता न्याय्या ॥४॥

स्पष्टमिदम् ।

सकलं जगद्विधानं
सञ्चाल्यं तेन वै प्रकारेण ।
येन निखिलजनतायाः
सौख्यं निर्बाधतामियात् सुसमम् ॥५॥

सर्वेऽपि मानवाः समानतया सुखभाजो यथा भवेयुस्तथा जगच्छास्त्र-विधानं सञ्चालनीयम् ।

सौख्याय च यतनीयं
त्याज्यं धर्मादिचिन्तनं वितथम् ।
ईश्वरचिन्ता ज्ञेया
भीरूणां बालकल्पनाकल्पा ॥६॥

यथा बालास्त्रस्यन्तो भूतप्रेतादिकल्पनां कुर्वन्ति तथैवादिमैरप्रबुद्ध-बुद्धिभिरनावृष्टि-दुर्भिक्षातिवृष्टिवज्रपातोदीपादिभ्यो जराव्याधिमृत्युप्रभृतिभ्यश्च बिभ्यद्भिरर्धसभ्यैर्मानवैरेव धर्माधर्मेश्वरादीनां कल्पना कृतेति ज्ञेयम् । अतस्तत्सर्वं निःसारम् ।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

कर्म न किञ्चिद्धर्म्यं
नैवाधर्म्यं कदापि मन्तव्यम् ।
येन सुखं जनतायाः
सम्भाव्यं तत् सदैव करणीयम् ॥७॥

स्पष्टमेवेदम् ।

सकलमनुजसुखहेतो-
र्यत्नः शैवे सुसम्मतो नूनम् ।
शेषो यः सिद्धान्तो
नास्तिकवादस्य नैव युक्तोऽसौ ॥८॥

धर्मादिविरुद्धा नास्तिकसिद्धान्ता नैव शैवानामभीष्टाः । धर्मादिबाधामकुर्वन् यः कश्चिदपि तेषां जनसुखकरो यत्नः स तु शैवसम्मत एव ।

देहाद्यतिरिक्तो हि
स्वात्मा मानुष्यकस्य सर्वस्य ।
सुप्ते तुर्ये च पदे
संविदितश्चिन्मयः स्वयं नूनम् ॥९॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

सुप्ते पदे-सुषुप्तौ । तुर्ये पदे चिदानन्दघनायामवस्थायाम् । सा च दशातिप्रहर्षाश्चर्यभयादिक्षणेषु, रसभावादिचर्वणाक्षणेषु च साधारणानामपि मनुजानां स्वसंवेदनेनैव संवेद्यैव, योगाद्यभ्यासोपायतश्च सुषुप्तेस्तुर्याया इव स्वभावस्य स्फुटतरा अभिव्यक्तिर्भवति। तदभिव्यक्तौ चिदानन्दमयः स्वात्मा स्वयमेव साक्षात्क्रियते ।।

भूतानां तु जडत्वात्

प्रवृत्तिजाते प्रयोजनं नैव ।

अनुसन्धातुं शक्यं नैव

ततश्चित्र-विश्व-भाव-जनिः ।।१०।।

प्रवृत्तिजाते-जगत्सृष्ट्यादौ । प्रयोजनानुसन्धानं विनैव जडभूतानां गतिमत्तामात्रेण स्थूलतादिमत्त्वमेव सम्भवेन्न पुनर्विचित्रार्थक्रियाकारिणां सुविचित्राणां विश्वभावानां सृष्ट्यादि ।

अर्थक्रियानुकूलं विचित्र-

तनुकरणलोकजातं यत् ।

अनुमापयेत्किमपि तद्

वुद्धिविभवशालि कारणं त्वजडम् ।।११।।

सुविचित्रेऽत्र शरीरभुवनभावमये विश्वस्मिञ्जगति न किमपि तथाविधं वस्तु यस्य निजा कापि विशेषार्थक्रिया नास्ति। ततोऽर्थक्रियानुसन्धाने समर्थेन केनापि बुद्धिमता चेतनेनैतज्जगद्विरचितमित्यनुमीयते ।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

स्वप्नमनोराज्यादावीश्वरता
परिमिता स्फुटा स्वीया ।
सकलजगत्सृष्ट्यादा-
वमिता परमेशतानुमातव्या ॥१२॥

स्वप्नसङ्कल्पमनोराज्यादौ जीवो यदिच्छति तत् सृजत्यवति संहरति च । ततः स्वसंवेदनसिद्धं सर्वस्य सृष्ट्यादिकर्तृत्वमयं परिमितमीश्वरत्वम् । तद्दृष्टान्ततो विचित्रसकलजगत्सृष्ट्यादिकर्ता ईश्वरोऽनुमीयते ।

एकजनकजननीनामवि-
शेषपरिस्थितौ प्रवृद्धानाम् ।
जीवानां चित्तादेर्वैचित्र्य-
मकारणं कथं नु भवेत् ॥१३॥

मातापितृजानां संस्काराणां सामाजिकसम्पर्ककारणानाञ्च तेषा-मुभयेषां समानप्रायत्वेऽपि सहोदराणां चित्तवृत्त्यादेरतिविचित्रं वैषम्यं कथमुपपद्येत चेत्तत्कारणतया तेषां प्राक्तनजन्मवासनानामनुमानं न क्रियेत ।

अनुमातव्याश्च ततः
प्राक्तनकर्मादिवासनाश्चित्राः ।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

योगाद्यभ्यासवशाज्जाति-

स्मरणं प्रमाणमपरञ्च ॥१४॥

योगिनोऽभ्यासविशेषोपायतो यत् पूर्वजातिं स्मरन्ति तत्तु दृढतरं प्रमाणं यत् कायादतिरिक्तः कश्चन तत्त्वविशेषो जीवात्मा यः पूर्वशरीरं त्यक्त्वेदानीं योगिशरीरधारी दृश्यते ।

पर्यन्ते विरसत्वाद्

दुष्पूरत्वाच्च वासनावह्नेः ।

कीटाद्यविशेषत्वाद्

विषयसुखं न प्रयोजनं सुधियाम् ॥१५॥

विषयसुखभोगस्तु पर्यन्ते विरसः, भोगवासनाया अधिकाधिकमुद्दीपकोऽसन्तोषप्रदः, उत्कृष्टतरभोगदर्शनत ईर्ष्याकरः, कीटादिकैः क्षुद्रतरैश्च जीवैः सह समानताप्रयोजकः । ततः सुधियो विषयसुखोपभोगं जीवनस्य मुख्यं प्रयोजनं नैव मन्वते ।

सुखिनामपि मनुजानां ध्रुवो

हि मृत्युः सदैव पर्यन्ते ।

चरमं लक्ष्यं मरणं स्वीकार्यं

तेन जन्मनो ह्यवशम् ॥१६॥

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अनात्मवादिना नास्तिकेनानिच्छतापि मृत्युरेव जन्मनोऽन्तिमं लक्ष्यं स्वीकार्यमेव । तच्च न तस्याभीष्टमन्यस्य वा कस्यचित् । सर्वे हि मृत्युभयात् त्रस्यन्ति लोके ॥

तच्च सुखे दुःखे वा
 समं विजेतुं तदेव सन्मतिभिः ।
विषयसुखादतिरिक्ते
 धर्मादौ चापि साधु यतनीयम् ॥१७॥

सुखमयजीवनान्तेऽपि मृत्युर्दुःखमयजीवनान्तेऽपि स एव । स मृत्युरेव महादुःखरूपः । तदेतन्महत्तमं दुःखं समानमेव सुखिनां दुःखिनाञ्च । तस्य मृत्योर्जयार्थं धर्मो दर्शनविद्या चोपायौ, न कथमपि विषयसुखं, न चापि साम्यवादस्य काश्चनापि विभूतयः ॥

साम्येऽपि हि वैषम्यं
 नोपेक्ष्यं चित्रवासनाजन्यम् ।
साम्ये वैषम्ये वा नैव
 ततश्शोभना पराकाष्ठा ॥१८॥

प्राक्तन-कर्मादि-वासनाकृतं जीवानां पारस्परिकं वैषम्यं कोऽपह्नवीत । तस्मादत्यन्तं साम्यं त्वसम्भवमेव । असम्भवञ्च

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

यद्धनिकत्वदारिद्र्‌ययोर्वैषम्यं दरीदृश्यते लोके तदपि शोषकशोष्यभाव-दूषितत्वाद् गर्हितमेव । ततोऽनतिसाम्यमनतिवैषम्यञ्च युक्तियुक्ततयाः न्याय्यम् ।

अत्र कारिकः—१८ पूर्वाभिः सह—७८

इति श्रीस्वातन्त्र्यदर्पणे सटिप्पणे
नास्तिकवादपरीक्षणाख्यमाह्निकं
पञ्चमम् ॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अथ

षष्ठमाह्निकम्

# वादान्तरदिग्दर्शनम्

महिमानुग्रहशक्तेः परमेश-

स्यात्र मुख्यतो द्विविधः ।

आविर्भावस्तु गुरोः प्रथमः

शास्त्रस्य चापरो वेद्यः ॥१॥

यद्यन्मोक्षशास्त्रं तत्तत्सर्वं साक्षाद्वा परम्परया वा परमेश्वरानुग्रहात्मकमेव । पारमेश्वर-साक्षात्कार-कारकस्य गुरोरस्मिँल्लोके य आविर्भावः स तु परमेश्वरस्यानुजिघृक्षयैव भवति । तस्यैवाविर्भावः शास्त्राविर्भावादपि सुतरां महिममण्डितः । तदुपदेशस्यैव शास्त्रात्मकत्वात्, तत्साहाय्येनैव च शास्त्रस्य फलप्रदत्वात् ।



CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

परमानुग्रहनुन्नैर्बहुधा
गुरुभिस्तु शास्त्रमुपदिष्टम् ।
अद्वैतं द्वैतञ्च द्वैताद्वैतं
तथा समवलम्ब्य ॥२॥

गुरुभिर्जिज्ञासूनां मुमुक्षूणां चाधिकारभेदमवलोक्य किमपि शास्त्रमभेददृशा, किमपि भेदेऽप्यभेददृशा, अपरं सर्वथा भेददृशा समुपदिष्टम् । अभेददृशि त्वेकमेव पारमेश्वरं तत्त्वं सर्वत्र सर्वथा विभाति । भेदाभेददृशि जीवाः जगच्चेत्युभयं पृथक् पृथक् सत्तां भजमानमपि परमेश्वरेणाभिन्नमेव दृश्यते । परमेश्वरश्चैकः सन्नपि जीवजगदात्मकतया भेदभागपि ज्ञायते । भेददृशि परमेश्वरः परमेश्वर एव, जीवो जीव एव, जगच्च जगदेवेति पृथक् पृथक् सत्तां भजमानाः प्रकाशन्ते ।

स्वल्पमतीनां द्वैतं द्वैताद्वैतं
ततः प्रबुद्धानाम् ।
धीराणाञ्चाद्वैतं सम्बोधार्थं
समाश्रितं गुरुभिः ॥३॥

मन्दधिषणा द्वैतशास्त्रेऽधिकारिणो, मध्यमकोटिभाजो द्वैताद्वैते, तीव्रधीशालिनः प्रकृष्टोत्साहाश्चाद्वैते ।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

उपदेशस्य प्रकाराश्चत्वारो
मुख्यतो मतास्सद्भिः ।
यानाश्रितानि शास्त्राण्यं-
शांशतयाऽथवा सुपूर्णतया ॥४॥

कानिचिच्छास्त्राण्येकमेव वादं पूर्णतया समाश्रितानि, यथा विज्ञानवादिन आभासवादमेव, सांख्याश्च परिणामवादमेव । कानिचित्पुनः शास्त्राणि भिन्नं वादद्वयमंशतः समाश्रयन्ते, यथा वैष्णवाः अंशतः स्वातन्त्र्यमंशतश्च परिणामम् ; यतस्ते परमेश्वरस्य स्वातन्त्र्यं लीलासिद्धान्तरूपं तच्छक्तेश्च परिणामं प्रतिपन्नाः ।

तत्रैकोऽस्त्यारम्भः परिणामो-
ऽस्ति द्वितीयको वादः ।
आभासोऽस्ति तृतीयस्तुर्यः
स्वातन्त्र्यमेव सिद्धान्तः ॥५॥

आरम्भादयस्त्रयो वादाः, पक्षप्रतिपक्षाभ्युपगमाश्रितत्वात् । स्वातन्त्र्यं तु न वादः । वादलक्षणस्य तत्राविद्यमानत्वात् । वस्तुस्थितिकथनात्मकत्वादसौ सिद्धान्त एव ।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अत्रानुग्रहलीलां चित्रां
पश्यन्ति भक्तिरसरसिकाः ।
निग्रहनीरसहृदया विवदन्ते
तर्ककर्कशैः कलहैः ॥६॥

भगवद्भक्ताः सर्वेषु शास्त्रजातेषु भगवदनुग्रहलीलाविलासमेव पश्यन्ति । प्रभुनिग्रहनिगृहीता एव जनाः कलहं कुर्वन्ति नीरसं हठमाश्रित्य स्वमेव सत्यमपरञ्च सर्वं मिथ्येति प्रतिपादयन्ति तर्ककर्कशशास्त्रार्थपूर्वकम् ।

शिष्यमतेर्वैचित्र्याद् युक्ताः
पूर्वे त्रयोऽप्यमी वादाः ।
तुष्टिकरस्तीक्ष्णधियां तथापि
रम्यस्तुरीयसिद्धान्तः ॥७॥

उत्तमाधममध्यमानामधिकारिणां शिष्याणां ग्रहणसामर्थ्यभेदाद् आभासारम्भपरिणामवादाः क्रमेण सफलाः, अतएव तदुपयुक्तत्वेन युक्ति-युक्ता एव । परमुत्तमोत्तमाधिकारिणां तीक्ष्णतरधिषणानां शिष्याणां कृते सम्यक्सन्तोषप्रदस्तु तुरीयः स्वातन्त्र्यसिद्धान्त एव । किञ्चासौ स्वातन्त्र्यसिद्धान्तस्तुरीयदशाया उत्तरतरे पदे विद्यमानस्यात्मस्वरूपस्य

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

प्रतिपादकत्वेन तुरीयदशोचितदर्शनराद्धान्त इति स एवोच्चतर उत्कृष्टतरश्च सिद्धान्तः। रम्यत्वं च तस्य सकलशङ्कातङ्कशमकत्वेन परिपूर्णपारमेश्वरानन्दप्रदत्वेन च।

भेददृशस्त्वारम्भे रक्ताः
सुविवेकिनोऽपि परिणामे।
आभासेऽतिविरक्ताः
स्वातन्त्र्ये च प्रकृष्टभक्तियुताः ॥८॥

भेददृशो नैयायिकादयः। सुविवेकिनः सांख्याद्याः। अतिविरक्ताः बौद्धवेदान्तिप्रभृतयः। भक्तियुक्ताः शैववैष्णवाः। प्रकृष्टभक्तिभाजः पुनरद्वैतशैवा एव।

ईश्वर इह सर्वज्ञो जीवानां
भुक्तिमुक्तिदो विश्वम्।
परमाणूपादानं कर्म-
निमित्तं कुलालवत् सृजति ॥९॥

परमकारुणिक ईश्वरो जीवानां प्रारब्धकर्मानुसारमेव परमाणुभ्यो विश्वसृष्ट्यादिकं कुरुते। तदित्थं कर्मोपादानाद्यपेक्षं सत् परतन्त्रमेव तस्यैश्वर्यम्।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अत्रान्तर्जीवात्मा तत्त्व-
ज्ञानं यदा परं लभते ।
भवति तदा कूटस्थो
ज्ञानसुखादिकविशेषगुणविरतः ॥१०॥

जीवस्य प्रमाणादि-षोडश-पदार्थानां-तत्त्वज्ञानेन मिथ्याज्ञानस्य नाशस्तन्नाशाद् रागद्वेषमोहनाशस्तेषु नष्टेषु प्रवृत्तेर्नाशः, प्रवृत्तिप्रशमे कर्मानुत्पादः, कर्मोच्छेदे जन्माभावः, जन्माभावे दुःखविनाशरूपो मोक्षोऽपवर्गसमाख्यः । अपवर्गावस्थायां जीवे ज्ञानादिविशेषगुणव्यापाराणां योग्यतायां सत्यामपि प्रवृत्त्यभावात् सकलविशेषगुणविरतिः । तदियमात्यन्तिकी विरतिरेवापवर्गाख्यो मोक्षः । तदुक्तम् "अपवर्गस्त्यागमोक्षयोः क्रियावसाने साफल्ये" (इति कोषः) ।

इयमेव तस्य मुक्तिः
परोपकारे रतस्तु परमात्मा ।
सृष्टि-स्थिति-संहारान्
कुर्वन्नारम्भकारितां भजते ॥११॥

आरम्भकारित्वं-सृष्ट्यादिकर्तृत्वम् । असत्कार्यकर्तृत्ववादोऽयम् । सर्वास्तिवादिनो बौद्धास्तावन्निरीश्वरा असत्कार्यवादिनो नैयायिकादयश्च सेश्वराः ।

CC-0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

प्रकृतिर्जडा त्रिगुणका

रजसा चाञ्चल्यशालिनी भवति ।

पुरुषस्यार्थं च ततो

भजते बुद्ध्यादिनेह परिणामम् ॥१२॥

सत्त्वरजस्तमोगुणमयी मूलप्रकृतिः पुरुषस्य भोगकैवल्ययोः कृते बुद्ध्यहंकारादितत्त्वक्रमेण स्वरूपपरिवर्तनात्मकं परिणामं स्वत एव भजते । तस्याः प्रवर्तकस्त्वेकतः भोगमोक्षात्मकः पुरुषार्थोऽपरतस्तु रजोगुणकृतं चाञ्चल्यम् । प्रकृतेः परिणाम एव विश्वं जगत् । गुणत्रयस्य परमं साम्यं प्रकृतिर्वैषम्यं च जगत् ।

चैतन्यमात्रतत्त्वाः स्वं

प्रतिविम्वं च वुद्धिगं दृष्ट्वा ।

अविवेक हृताः पुरुषा

भजमाना साक्षिभावमपि तत्र ॥१३॥

भुञ्जन्ति वुद्धिधर्मान् सर्वां-

श्चित्रांस्ततो ह्यमी बद्धाः ।

चैतन्यमेवैकमात्रो धर्मः पुरुषाणाम् । सर्वमप्यन्यज्ज्ञानसुखादि बुद्धिधर्मजातः । बुद्धया साकमनादिरेषामविवेकः पुरुषाणाम् । ततो बुद्धौ प्रति-

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

बिम्बिताः सन्तः सुखदुःखप्रभृतीन् बुद्धिधर्मांश्च तान् सुविचित्ररूपान् केवलं साक्षिभावेन पश्यन्तः सन्तस्तेषां भोगं लभन्ते । कर्तृत्वं सुखदुःखादिकञ्च वस्तुतो बुद्धेरेव । परं तेषां साक्षी पुरुषः । साक्षित्वेनैवासौ भोक्ता । बन्धनमपि वस्तुतो बुद्धेरेव । परमविवेकवशात् पुरुषाः बन्धनस्य साक्षिभावेनैव तद्भोगभाजः ।

पुरुष-प्रतिबिम्बबलाद्
बुद्धिस्त्वजडेव भासते नूनम् ॥१४॥

बुद्धौ पुरुषः प्रतिबिम्बितः । तस्य प्रतिबिम्बेन साऽऽत्मानं चेतनमिव पश्यन्ती चेतनवत् कर्म करोति ।

अविवेकवशादेवं प्रचलति
परिणामसन्ततिर्विश्वम् ।

प्रकृतिर्जगद्रूपतया परिणमते पुनः पुनः सृष्टिकाले, संहारकाले च जगत् पुनः पुनः प्रकृतीभूय प्रकृतौ विलीयते । इयं तावत परिणामसन्ततिः । सैव च विश्वं जगत् । एतस्य निमित्तभूतं मूल-कारणं प्रकृतिपुरुषयोरविवेकः ॥

ख्याति यदा तु विवेकः
प्रकृतिर्विरता तदा स्वयं भवति ॥१५॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

त्यजति ततः साक्षित्वं

पुरुषः प्रकृतौ भवन्नुदासीनः ।

इयमेव तस्य मुक्तिः

कथिता परिणामवादिभिः सुजनैः ॥१६॥

चित्स्वरूपः पुरुषोऽन्यः प्रकृतिश्चान्या। सर्वं सुखदुःखादिकमेतस्या एव प्रकृतेर्न पुरुषस्य। ततो पुरुषस्य किमनया, किञ्चास्याः परिणामजातेन, इत्येवंरूपं निश्चयात्मकं ज्ञानमेव दृढीभूतं सद् विवेकस्य ख्यातिः । एनामपि पुरुषः साक्षितया पश्यति यदा तदाऽस्यां विवेकख्यात्यां सम्पन्नायां प्रकृतिः पुरुषं प्रति कृतकृत्यतया तस्माद् विरता भवति । पुरुषोऽपि विवेकख्यातिदर्शनेन प्रकृतिं प्रत्युदासीनो भवन् तस्याः परिणामानां साक्षित्वं प्रत्युदासीनो भवति । ततः शरीरपातानन्तरमसौ साक्षित्वं सर्वथा परित्यज्य प्रकृत्यापि त्यक्तः सन् केवलस्तिष्ठन् कैवल्यमवाप्नोति । तत् केवलत्वमेव तस्य मोक्षः । सांख्ययोगभागवतपाशुपतादयः परिणामवादिनः । कैवल्यप्राप्तिमात्रेण सन्तुष्यन्तस्ते सुजनाः—सरलसरला मन्दमतय इति व्यङ्ग्यार्थः ।

गन्धर्वनगरकल्पं त्वनाद्ययाऽ-

विद्यया जगद् भाति ।

जीवस्य सापि मिथ्याऽविद्या

नूनं न चापि निर्वाच्या ॥१७॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

जगन्नैव वर्तते। केवलमेवभात्येव। जगतोऽवभासस्य कारणमज्ञानात्मिकाऽविद्या। सा चानाद्या। इत्थम्भूतेति वाऽनित्थंभूतेति वा, सत्येति वाऽसत्येति वा, इत्यादि प्रकारैर्निर्वक्तुमशक्यासौ। परं तथापि निःसारा सती मिथ्यैव, न परमार्थतः सद्रूपा। तया हेतुभूतया भ्रमवशादेवास्य जगतोऽवभासमात्रम्। स चावभासोऽज्ञानमूलकः सन् ज्ञानोदये विलीयते। तदुदये नाविद्या, न चायं प्रपञ्चो न चापि जीवेश्वरौ, केवलं ब्रह्मैव सत्।

ब्रह्मैवैकं सत्यं शान्तं
नित्यं च सच्चिदानन्दम्।
मायापि हि सा मिथ्या
यया त्विदं भाति भेदवैचित्र्यम् ॥१८॥

सच्चिदानन्दस्वरूपं सृष्ट्यादिक्रियाशून्यत्वेन शान्तं ब्रह्मैवैकमात्रं नित्यसत्यं तत्त्वम्। भेदवैचित्र्यावभासस्य कारणभूता मायापि वस्तुतो मिथ्यैव।

निश्चित्यैवं सम्यग् ब्रह्मणि
जीवो मुदा लयं याति।
इत्येषोऽस्त्याभासो वादो
वैवर्त्तिकोऽत्र वेदान्तः ॥१९॥

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अखण्डचिद्रूपस्य ब्रह्मण एव केवलस्य वास्तविकीं सत्तां स्वस्य चापि तदात्मकतामेव निश्चित्य देहपाते जीवो विनैवायासमेवमेव ब्रह्मणि लीयते, भग्ने घटे घटाकाश इव महाकाशे । एष तावद् विवर्त्तवादाश्रितोऽद्वैतवेदान्तदर्शनस्याभासवादः । अविद्यमानस्य जगतः प्रतीतिर्विवर्त्तः, अन्यस्य च अन्यथा प्रतीतिरपि विवर्तः । ततो ब्रह्मणो जीवेश्वरजगद्रूपतया प्रतीतिरत्र विवर्त्तः । अत्रेत्याभासवादिमते ।

बौद्धानां राद्धान्ते शून्यं
सर्वं सदैव पर्यन्ते ।
नास्ति ब्रह्म न जीवो
नैव स्थूलं जगन्न वा प्रकृतिः ॥२०॥

बौद्धानां मते—शून्यवादे वा विज्ञानवादे वा प्रकारान्तरे आभासवादे क्रमेण शून्यमेव शुद्धमेव वा विज्ञानमात्रं पर्यन्ते निर्वाणदशायामवशिष्यते । अहमात्मकमालयविज्ञानं विषयावभासात्मकं च प्रवृत्तिविज्ञानमुभयमपि विलीनं भवति । जीवब्रह्मादिकं सर्वं संवृत्यैव कल्पितं सद् वस्तुतो नास्त्येव ।

क्षणिकं हि तु विज्ञानं
प्रवहत् सन्तानरूपतां गच्छत् ।
अहमित्यभिमानपदं तस्या-
काराः प्रमेयजातानि ॥२१॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

यथाऽसंख्यानि प्रवहणशीलानि क्षणिकानि जलानि विहाय न किमपि तत्त्वान्तरमेका नदी, तथैव क्षणिकानि विज्ञानानि विहाय न कोप्यन्यो वस्तुभूत आत्मा। यथा च तेषु क्षणिकेषु जलेष्वेकस्य नदीत्वस्य कल्पनामात्रं क्रियते विकल्पबुद्धया, तथैव प्रवहणशीलेषु क्षणिकेष्वालयविज्ञानेषु विकल्पबुद्धयैकस्य स्थिरस्य अहमात्मकस्यात्मनः कल्पना विधीयते। वस्तुतस्तु अहमित्यभिमानोऽपि क्षणिकमालयविज्ञानमेव। बाह्यमान्तरञ्च प्रमेयजातं विज्ञानात्मकस्य चित्तस्य संस्काराणामाकारजातमेव, स्वप्न-संसारवदिति विज्ञानवादिनां मतम्। अहमित्याभास आलयविज्ञानं, नीलसुखाद्याभासाश्च प्रवृत्तिविज्ञानम्।

मिथ्याज्ञाननिमित्ता विज्ञाने
वासना अनाद्या याः।
ताभिः खलु विज्ञानं सन्तत्या
वहति येन संसरणम् ॥२२॥

चित्तमनादिमिथ्याज्ञानवासनाभिराविष्टं सदैव प्रवहति, तेनैव च संसरति। ततो चित्तस्य वासना एव बन्धनस्य कारणम् ॥

निश्चित्य तु शून्यत्वं
परमार्थत्वेन सर्वभावानाम्।
क्लेशक्षयादिपूर्वं विरज्य
देहं त्यजत्तु विज्ञानम् ॥२३॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

क्षणिकं नहि सन्तानं
जनयेन्निर्वाणशून्यतां गच्छेत् ।

क्षीणक्लेशस्य संसाराद् विरक्तस्य निश्चितशून्यत्वस्य च विज्ञानात्मकस्य चित्तस्य देहपाते जाते नैव क्षणिकचित्तान्तरजननम् । ततश्चित्तप्रवाहस्योच्छेद एव । स एव शून्यभावः । तदेवं दीपनिर्वाणकल्पो विनाश एव हि निर्वाणम् ।

इत्थं तेषां मुक्तिः स्वात्मो-
च्छेदेन शून्यताभावः ॥२४॥

समुच्छिन्ने चित्तप्रवाहे शून्यताया भावः शून्यतात्मको वाऽभावो बौद्धानां मुक्तिः ।

अत्र कारिकाः=२४  पूर्वाभिः सह=१२२

—इति श्री स्वातन्त्र्यदर्पणे सटिप्पणे
वादान्तरदिग्दर्शनाख्यमाह्निकं
षष्ठम् ।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अथ

सप्तममाह्निकम्

# वादान्तरदोष-प्रदर्शनम्

एवं त्रयोऽपि वादा
आरम्भाद्याः समासतः प्रोक्ताः ।
कियताप्यंशेनैते युक्ताः सर्वे
न सर्वथा युक्ताः ॥१॥

त्रयोऽप्यारम्भाद्या वादा एव, पक्षप्रतिपक्षपरिग्रहवत्त्वात् । स्वातन्त्र्यं तु न तथा । तस्य वस्तुस्थितिप्रतिपादकत्वात् । आरम्भाद्यास्त्रयोंऽशतो युक्ताः, परमंशतोऽयुक्ता अपि ।

भिन्नां प्राजापत्यां सृष्टिं
यावत्त्वबाध आरम्भः ।



CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

कार्यकरणवर्गस्य प्रधानतो
युक्त एव परिणामः ॥२॥

यस्यां भूमौ प्रजापतिः परमाणुभ्यः स्वस्माद् भिन्नं जगन्निर्माति तां भूमिं यावदेवारम्भवादो युक्तियुक्तो न तदुपरि । शब्दादीनामाकाशादीनां च कार्याणाम् बाह्यानामान्तराणां च करणानां प्रकृतिपरिणामतः सृष्टिसंहृती प्रकृतिपुरुषतत्त्वभूमिकां यावद् युक्तियुक्ते एव । परं तदुपरि न परिणामवादस्य गतिः ।

सर्वस्य विकल्पस्यावस्तु-
त्वेनैव साधुराभासः ।
त्रितयस्य परं बीजं
पर्यन्ते यत्तु तत् स्वतन्त्रत्वम् ॥३॥

विकल्पस्तु स्वभावतो वस्तुशून्य एव । अतस्तस्याभासमात्रमेव यदाभासवादिभिरुपदिष्टं तदपि सम्यगेव । परं पारमेश्वरस्वातन्त्र्यमहिम्नैव ह्यविद्याया आभासे सति विकल्पानामाभासो नानाद्ययाऽविद्यया नचापि मूलतो वासनया । आभासे च सत्येव प्रकृतेः परिणामः, परिणामे च सम्पन्न एव परमाणुभ्यो जगदारम्भः । ततः सर्वस्यैतस्य मूलाधारतया स्वातन्त्र्यमेव चकास्ति ।

परमाणुत्वमसिद्धं सततं
परमात्मनोऽस्वतन्त्रत्वम् ।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

मुक्तिश्च जाड्यकल्पाऽऽरम्भे-
ऽसिद्धस्तथावयविभावः ॥४॥

परमाणुसंयोगेन द्व्यणुकादिक्रमेण जगदारम्भः । संयोगश्च द्रव्यस्यैकपार्श्वतः एव सम्भवति । तेन परमाणोः सपार्श्वत्वे सति सांशत्वम्, सांशस्य च न परमाणुत्वम्, तस्य परिमण्डलनिरंशत्वेनाभिमतत्वात् । परमात्मनश्च सृष्ट्यादिकरणे परमाण्वपेक्षत्वम्, जीवकृतकर्मापेक्षत्वं च पारतन्त्र्यावहम् । अपवर्गावस्थायां जीवस्य ज्ञानादिशून्यतया मुक्तेर्जाड्यप्रायत्वम् । एकस्यावयविन एकस्मिन्नेव कालेऽनेकावयवनिष्ठत्वस्यासमञ्जसत्वम् ।

प्रकृतिर्जडा स्वभावात्कथं
विचित्रं जगत् स्वयं जनयेत् ।
पुरुषोऽपि नभः कल्पो नैवं
तुष्टिप्रदोऽस्ति परिणामः ॥५॥

नहि जडस्य तत्त्वस्य जगतो जननेऽजनने वा स्वतः प्रवृत्तिः सम्भवेत् । अनन्त वैचित्र्ययुक्तस्य विचित्रार्थक्रियाकारिणो भावजातस्य सृष्ट्यादौ तत्तत्प्रयोजनानुसन्धानमावश्यकम् । तत्तावदचेतनस्य प्रधानस्य न सम्भवेत् । पुरुषस्य नभःकल्पत्वेन नाममात्रं चैतन्यम् । चेतनोचितं ज्ञानक्रियास्वातन्त्र्यं तु परिणामवादिभिः प्रधानस्य मन्यते । किञ्च कर्मकर्तृत्वं बुद्धेः, फलभोक्तृत्वञ्च पुरुषस्येत्येतदनुपपन्नम् । कैवल्यदशात्मिका तेषामपि मुक्तिर्जाड्यकल्पैव, ज्ञानक्रियास्वातन्त्र्यराहित्यात् ।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

सर्वं यदास्ति मिथ्या कस्य
कुतो वास्ति हा प्रपञ्चोऽयम् ।
कस्य कुतश्चाविद्या भान्त्यपि
खलु सा कथं न निर्वाच्या ॥६॥

न तावद् ब्रह्मणोऽविद्याकृतः प्रपञ्चः, तस्य विद्यैकरूपत्वात् । न चापि जीवस्य, तस्य ब्रह्मव्यतिरिक्तत्वेनासत्त्वात् । कुतश्चायाताऽविद्या । किं तस्याः कारणम् । तस्या ब्रह्मवदनादित्वे कथं न द्वैतवादापत्तिः । स्वयमसारा सा कथं सुविचित्रमिदं जगदवभासयेत् । जगद्रूपतया भासमानापि सा कथं न निर्वाच्या । चेन्नैव भासते, तदा किं तया । विश्वस्य मिथ्यात्वे किमर्थं गुरुशास्त्राद्युपासनम्, कस्य च बन्धमोक्षादिप्रपञ्चः ।

ब्रह्मापि चेत् स्वनिष्ठं
शान्तं गगनोपमं तथास्पन्दम् ।
काऽऽनन्दताथ चित्ता सत्ता
वा तस्य शून्यकल्पस्य ॥७॥

आनन्दो हि स्फुरत्तास्वरूप-चमत्कारात्मकपरतरक्रियारूपः । सचैवंस्वरूपः सर्वस्य स्वप्रकाशतया स्वानुभवसिद्धः । चित्तापि स्फुरत्तात्मकपरक्रियारूपैव, यतश्चैतन्यं न कदाप्यस्पन्दम् । सत्तापि स्फुरत्तायत्तैव ।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

यदेव हि स्फुरति तदेवास्तीति सिद्ध्यति। स्फुरत्ता च विमर्शात्मकस्पन्दरूपता। ततोऽस्पन्दस्य स्वरूपमात्रनिष्ठस्यैश्वर्यहीनस्य क्रियाशून्यतया सर्वथा शान्तस्यात एवाकाशकल्पस्य ब्रह्मणः सच्चिदानन्दरूपतैव तावदनुपपन्ना।

ब्रह्मैव च यदि सत्यं

को जीवः का कुतश्च वा माया।

नैवं हि तुष्टिकारी

सूक्ष्मधियामस्ति वेदवादोऽयम् ॥८॥

अद्वैतस्य केवलस्य ब्रह्मण एव सत्यत्वे को जीवादिः, को बद्धः, को मोच्यः, को गुरुः, कः शिष्यः, किं शास्त्रम्, इति सर्वमनुपपन्नमेव। का ब्रह्मण उपाधिरूपा माया, कुतश्च सा, कथं सा ब्रह्मणि संलग्नेत्यादिकमपि नैव कथमपि सन्तोषकारितयोपपाद्यते वेदान्तिभिः। वेदवादोऽद्वैतवेदान्तवादः।

आत्मास्थैर्यं दोषः क्षणि-

कत्वे ज्ञानसन्ततेर्मुख्यः।

व्यवहारानुपपत्तिः

स्वात्मोच्छेदस्तथा न योऽभीष्टः ॥९॥

CC0. Vasishtha Tripathi Collection. Digitized by Siddhanta eGangotri Gyaan Kosha

अविकल्पसविकल्पानामनुभवानां, स्मृतीनां, प्रत्यभिज्ञादीनां चैका-धारतया समन्वितानामेव सतां व्यावहारोपपत्तिहेतुत्वम् । चेन्निर्विकल्प-सविकल्पादिकं ज्ञानजातं परस्परं भिन्नं सन्नैकास्मिन्नाश्रये स्थितं सत् परस्परेण समन्वितं स्यात्, तदैतेषां ज्ञानानां परस्परमनुसन्धानेन जायमाना लोकव्यवहारव्यवस्था सर्वथा विनश्येत् । तत एषामेकाधारतया आत्मा सिद्धो भवति । तस्य निषेधे कृते क्षणिकस्य चित्तस्यास्थैर्यदेकाधारतयैतेषां ज्ञानानां किं तत्त्वमाश्रयतया गृह्येत । ततः ज्ञानाधारस्यास्थिरता मुख्यो दोषो बौद्धवादे । लोकव्यवहारानुपपत्तिश्च द्वितीयो दोषः । निर्वाणा-वस्थायां चित्तसन्तानात्मकस्य अहम्प्रत्ययालम्बनस्य यः समुच्छेदस्तैरङ्गी-क्रियते सोऽपि महान् दोषः । न हि कस्यापि स्वस्योच्छेदोऽभीष्टः ।

अत्र कारिकाः—९ पूर्वाभिः सह=१३१

इति श्री स्वातन्त्र्यदर्पणे सटिप्पणे
वादान्तरदोषप्रदर्शनाख्यमाह्निकं
सप्तमम् ।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अथ

अष्टममाह्निकम्

# स्वातन्त्र्यसिद्धान्तनिरूपणम्

स्वातन्त्र्यस्य हि तत्त्वं
पूर्वं सामान्यतः समाख्यातम् ।
अधुना तु तस्य शेषः
प्रपञ्चतो विस्तरेण कथनीयः ॥१॥

पूर्वं द्वितीये चतुर्थे चाह्निके । प्रपञ्चतो-भेदप्रभेदप्रदर्शनपूर्वकम् ।

नैसर्गिकः स्वभावः
शिवनाथस्य स्वतन्त्रता परमा ।
नापेक्षते यतोऽसौ किमपि
परं पञ्चकृत्यसुविलासे ॥२॥

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

सृष्ट्यादिपञ्चकृत्यानि परमः शिवः स्वयमेव करोति। नहि तत्सम्पादनेऽसौ स्वस्माद् भिन्नं किमपि निमित्तंकारणं कर्मादि वोपादानरूपं परमाण्वादि वाऽपेक्षते। एष परमुखप्रेक्षित्वाभाव एव तस्य परमं स्वातन्त्र्यम्।

नैवाणून् न च कर्माण्य-
पेक्षते नैव वासना न रजः।
नैवाप्यनाद्यविद्यां निरर्गलः
स्वेच्छया स्वयं विलसन् ॥३॥

नैयायिकमते परमेश्वरः परमाण्वाद्यपेक्षते। न्यायसांख्यवेदान्तेषु कर्मापेक्षं तस्य सृष्ट्यादि। बौद्धवादे वासनापेक्षः संसारः। सांख्ये रजोगुणापेक्षा सृष्टिः। वेदान्तेऽविद्यापेक्षमीश्वरस्येश्वरत्वम्। शैवे पुनः स्वतन्त्रं स्वभावभूतं च पारमैश्वर्यं परमशिवस्य येनानिरुद्धेच्छः सन्नसौ स्वयं स्वस्मिन् स्वतः पञ्चकृत्यलीलाविलासं विधत्ते।

स्वातन्त्र्यस्य महिम्ना
कल्पितमखिलं स्वतो महेशेन।
बाला एव हि तत्तत्
प्राहुर्जगतो निमित्तमिति नान्ये ॥४॥

पूर्णस्वातन्त्र्यशक्तिमहिम्ना परमेश्वरः स्वत एव निखिलं सृजति। स्वशक्तिप्रतिबिम्बजातं प्रकाशयति स्वस्मिन् प्रकाशे। तदेव बिम्बाकारतया-

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

ऽवभासते। बाला–स्वल्पतरज्ञानभाजो न्यायसांख्यबौद्धवेदान्तादिशास्त्रशरणाः। तत्तदिति परमाणुकर्मरजोवासनाऽविद्यादि। अन्ये इति सिद्धजनाः शैवाः।

परमार्थत आत्मैव
प्रकाशरूपो विमर्शसारश्च।
अहमिति सदावभासः
सत्यः शेषं प्रकल्पितं सर्वम् ॥५॥

शुद्धसंविन्मात्रस्वरूपतयाऽहमिति सदावभासो यस्य सः। संविच्च प्रकाशविमर्शयोः परं सामरस्यम्। तत्र प्रकाशात्मकता ज्ञानं, विमर्शात्मकता च क्रिया। परतरे इमे ज्ञानक्रिये। परमेश्वरः प्रकाशात्मकः। तस्य च प्रकाशस्य प्राणभूतो विमर्शः। निर्विमर्शस्य तस्य प्रकाशत्वमेव न स्यात्। पारमार्थिकी सत्ता च तस्य परमशिवस्यैव। शेषं तत्त्वभुवनादिकं सर्वं तस्य कलयैव भासते।

अद्वैतशुद्धसंविद्रूपः
स्वात्मा त्वसौ स्वतः सिद्धः।
विविधत्वकल्पनाया
विरहादविकल्प एव मन्तव्यः ॥६॥

विकल्पो हि तदतत्कल्पनापूर्वकस्तन्निश्चयस्यातन्निषेधस्य चावभासः। यथा "अश्वोऽयम्" इति विकल्पनेन ... निश्चयः,

CC-0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

गर्दभत्वाश्वतरत्वादेश्च निषेधः । अनयोर्निश्चयनिषेधयोः प्राक् पुरोऽवस्थिते तस्मिन् पिण्डेऽश्वत्वगर्दभत्ववृषभत्वाश्वतरत्वादीनां विविधानां नामरूप-युगलानां सम्भावना समुदेति । तत एव विविधत्वस्य कल्पनाया अनन्तरं यो तन्निश्चयातन्निषेधौ तावेव विकल्पः । अभिन्ने परिपूर्णे चाहमिति संविदाभासेऽभिन्नत्वादेव न विविधत्वकल्पनासम्भवः । ततोऽसा-वहमिति संविदविकल्पैव ।

इदमिति विषयतया यत्

संवृत्याऽऽभासते परं विश्वम् ।

परमार्थतो न तत् सन्ना-

सत्तत् सर्वथाऽपि मन्तव्यम् ॥७॥

संवृतिर्विकल्पबुद्धिः । तयाऽऽभासमानं प्रमेयजातं न परमार्थतया सत् । विकल्पस्य वस्तुशून्यत्वात् । परं नेदं प्रमेयं जगत् शशशृङ्गादिवत् सर्वथाप्यसत्यम् । अस्य सततगत्या कार्येषूपयोगित्वात् ।

अत एव हि संवृतिसद्

विकल्पबुद्ध्यावभासमानं तत् ।

विविधत्वकल्पनेनापोहस्त-

त्रैव सम्भवेद् द्वैते ॥८॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

विकल्पबुद्धिरूपया संवृत्याऽऽभासमानं विश्वं संवृतिसत्। तच्चास्य संवृतिसत्यत्वं सत्यत्वस्यैव प्रकारविशेषः। अतो नैतदसत्यम्। प्रथमक्षणे दृष्टे पुरुषे पुरुषस्थाणुस्तम्भप्रभृतीनामनेकेषां सम्भाव्यमानानां विषयाणामव-भासस्योन्मेषो भवति मनसि, द्वितीयस्मिंश्च क्षणे विविधानामेतासां कल्पनानां मध्ये पुरुषत्वकल्पनाया निश्चयः, स्थाणुत्वादिकल्पनानां च निषेधोऽनायासमेव सम्पद्यते। तद्रूपस्य पुरुषादेरतद्रूपेभ्यः स्थाणुप्रभृतिभ्यो या व्यावृत्तिः सैवापोह इत्युच्यते। "अतद् व्यावृत्तिरपोहः" इति हि तस्य लक्षणम्।

देहे बुद्धौ प्राणे शून्ये च
मितेऽहमिति य आभासः।
तद्भिन्नेभ्यो भेदात्
सोऽपि विषयवद्विकल्पमय एव ॥९॥

देहादिजडपदार्थस्य विषये योऽहमिति जीवदशोचितः आभासः, सोऽप्यन्यदेहादिघटादिनिषेधफलत्वादपोहात्मक एव, तत एव च प्रमेयविषय-वद् विकल्पात्मक एव। तेन केवलं संवित्तत्त्वालम्बन एवाहमिति विमर्शो निर्विकल्पकः।

आभास एव विश्वो व्यवहृति-
विषयः सुसम्मतः सिद्धैः।
आभासवादिनोऽत्राविद्यां
हेतुं परं प्रकल्पन्ते ॥१०॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

यो यो भावोऽभावो वा येन केनापि प्रकारेण व्यवहारविषयः, स स आभासमानतयाऽऽभासरूपः सन्नेव तथा भवति, न त्वनाभासः। अतो विश्वमाभासरूपमेव। विश्वमविद्यावशादेवाभासत इति वेदान्तवादिनो मन्यन्ते। बौद्धाश्च संवृतिमाभासहेतुं कथयन्ति। संवृतिश्च विकल्पबुद्धिर्वासनामूलेत्युक्तं प्राक्।

स्वातन्त्र्यदर्शिनस्त्वाभासे
हेतुं पुनर्महेशस्य।
परमं यत् स्वातन्त्र्यं
शक्तिघनत्वं तदेव मन्यन्ते ॥११॥

सर्वमपि जगत् परशिवे संविद्रूपतया सदैव विद्यमानमेव वर्तते, अङ्कुर इव बीजे बीजरूपतया। अङ्कुरावभासनशक्तिर्या बीजे विद्यते, सा शक्तिरेव तत्राङ्कुरस्य स्वरूपम्। ततोऽङ्कुरो बीजे शक्तिरूपतया विद्यमानस्तिष्ठति। तथैव विश्वं पारमैश्वर्यां संविदि संविद्रूपतया सदैव विद्यते। परमेश्वरे शक्तिरूपतयाऽभेदेन विद्यमानं विश्वं पारमैश्वर्यविलासतः परमेश्वरस्यैवेच्छया विश्वाकारतया भेदेनाप्यवभासत इति सिद्धानां सिद्धान्तः। तत एव सैद्धदर्शनानुसारिणः स्वातन्त्र्यदर्शिनः परमेश्वरस्य शक्तिघनत्वरूपं परमं स्वातन्त्र्यमेव विश्वस्याभासे हेतुं मन्यन्ते॥

सत्यत्वमसत्यत्वं प्रपञ्च-
जातेऽत्र कल्पितं गुरुभिः।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

शिष्याणां बोधार्थं नैव

तु परमार्थतोऽस्ति कापि भिदा ॥१२॥

एतत् सत्यम्, एतच्चासत्यमिति व्यवहारमात्रमेव । परमार्थतः कोऽपि भेदः कुत्रापि नास्ति । प्रपञ्चस्य परमशिवशक्त्यात्मकत्वात् शक्तेश्च शिवात्मकत्वात् सर्वं शिवात्मकं सदेकमेव तत्त्वम् । ततो न किमपि भिन्नम् । सत्यमसत्यञ्चोभयमपि शिवरूपत्वेनाभिन्नमेवेति काश्मरीशैवशास्त्र-सिद्धान्तः । वेदान्तादद्वैतसिद्धान्तादस्य शैवाद्वैतस्य भिन्नत्वं प्रख्यापयितुमाचार्याभिनवगुप्तादय इमं सिद्धान्तं पराद्वैतं कथयन्ति । भिदाभेदः । सा नैव परमार्थतया कापि वर्तते ।

भेदमये व्यवहारे

त्विदमिति सत्यं हि भासते विश्वम् ।

भेदाभेददशायां सर्वं

सत्यं निजाङ्गकल्पञ्च ॥१३॥

मायाभूमिकायां प्रमातृप्रमेयभेदः स्फुटः । ततोऽत्र विश्व--मिदन्तयाऽऽभासते । परं तथाभासमानमपि सत्यमेवाभाति नासत्यम्, अर्थक्रियोपयोगित्वात् । विद्याभूमिका भेदाभेदमयी । ततस्तत्र "अहमिदम्" इति वा "इदमहम्" इति वा विमर्शे इदमात्मकं प्रमेयं निजदेहवद् भेदे सत्यप्यभिन्नमेव भासते । तथा भासमानं तत् सत्यमेवाभाति नासत्यम् ।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

शुद्धोऽसौ व्यवहारोऽहन्ता-

च्छुरितत्वतस्त्विदन्तायाः ।

विद्याभूमाविदमात्मकं प्रमेयमहमात्मिकया प्रमातृतया सुसिक्तमिव । तत एव तत्रत्यो व्यवहारो व्यवहारः सन्नपि मायीयव्यवहारापेक्षया शुद्धः ॥

पूर्णाभेदपदस्थं सर्वं

पूर्णं सदाहमिति सत्यम् ॥१४॥

शक्तिभूमिकायां सर्वथा अभेदः । ततस्तत्र सर्वं परिपूर्णमह-मित्येव । इदमंशोऽपि तत्राहंरूपतयैव चकास्ति, अङ्कुर इव बीजे बीजात्मकतया । ततस्तत्र विश्वमहमात्मकतया वर्तमानं सत्यमेव ।

याथार्थ्येन तु सर्वं

परमं सत्यं शिवत्वपरमार्थम् ।

पूर्णं स्वातन्त्र्यवशात्

सदसद्व्यवहारभासनाबीजम् ॥१५॥

शिव एव यतस्तत्र तत्र भूमिकासु तथा तथाऽऽभातीति सर्वस्य शिवात्मकत्वेन वस्तुतः सर्वं परिपूर्णं परमं सत्यमेव । घटोऽपि परिपूर्णः परमः शिव एव । यथा परमः शिवः स्वातन्त्र्यशक्तिमहिम्ना सदसद्व्यव-हाराभासस्य मूलकारणम्, तथैव घटादिरपि, तस्यापि परशिवात्मकत्वात् ।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

एवं मोक्षोऽपि शिवात्मक एव बन्धोऽपि तद्रूप एव । न क्वापि कश्चनापि भेदः पराद्वैतसिद्धान्ते । सिद्धजनाश्च सर्वं साक्षात् तथैव पश्यन्तः कृत-कृत्यताभाजो भवन्ति ॥"

वाचा बुद्ध्यागम्यं
व्यवहारस्पर्शयोगतः शून्यम् ।
साक्षात्कार्यं स्वेन स्वयमेव
स्वं ह्यनुत्तरं किमपि ॥१६॥

यतः सर्वं परशिवात्मकं, ततो न किमपि वाचा पूर्णतया वक्तुं बुद्ध्या च सर्वथा ज्ञातुं शक्यम् । ततः सर्वं किमप्यनिर्वचनीयमनुत्तरमेव । न उत्तरं यस्मात्तथाविधं परिपूर्णासीमसंवित्स्वरूपमेव । तच्च तथा निरूप्यमानमपि न बुद्धिदर्पणे स्फुटं प्रतिफलितं भवति । ततो न वाचा सम्यङ् निर्वक्तुं शक्यते । अत एव वस्तुतोऽनिर्वाच्यमेव । स्वसंवेदनस्वरूपेणा परोक्षेण साक्षात्कारेणैव स्वात्मतयैव तत् साक्षात्कार्यम् ।

पूर्णः स्वयं स्वभावात्
संविद्रूपः शिवः स्वतन्त्रोऽहम् ।
इत्येव हि परमार्थो नैव
परं बुद्ध्यते तथा पशुभिः ॥१७॥

यदा सर्वं परिपूर्णपरशिवात्मकमेव तदाऽहमपि स्वतन्त्रः परशिव एव वस्तुतः । इति सर्वो जनः परशिव एव परमार्थतः । परं पशुप्रमातृणां तथाभिमानो मायाकृतादावरणात् ।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

जीवदशास्ववरोहो बहुधा
स्वातन्त्र्यकल्पितो हि यतः ।
कल्पितपशुताभूमौ
द्विविधा स्वातन्त्र्यकल्पनापि पुनः ॥१८॥

पूर्वार्धं कारिकाया उभयत्र योज्यम् यतः पारमेश्वरेण निजस्वातन्त्र्येण जीवदशास्ववरोहः कल्पितस्तत एव पशुभिः परमार्थो नावबुध्यते, तत एव चात्र जीवदशायां स्वातन्त्र्यस्य द्विस्वरूपा कल्पना, या अग्रे व्याख्यास्यते।

परमार्थतया त्वेका
योक्ता समनन्तरं स्वभावमयी ।
अपरा व्यवहारतया तस्या-
स्तत्त्वं प्रपञ्चतो ज्ञेयम् ॥१९॥

पारमेश्वरस्वभावभूतोच्छलनस्वरूपा तावत् पारमार्थिकी स्वतन्त्रता ययाऽसंख्यानां ब्रह्माण्डानां ब्रह्मादिकारणपञ्चकसहितानां लयोदयादि-क्रीडाविलासः सततं प्रचलति । अपरा च लोकव्यवहाराश्रयाऽग्रेऽभि-धास्यमाना ।

व्यवहारे परतन्त्रो नैव
यतो रज्यतीह परमार्थे ।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

तस्मात्पूर्वं साध्यं

स्वातन्त्र्यं व्यावहारिकं सुजनैः ॥२०॥

व्यवहारे परतन्त्रः कष्टमयं जीवनं यापयन् सततं चिन्ताकुलः सन् कथं पारमार्थिकस्वातन्त्र्यसाधने रज्येत । अतः प्रथमं व्यावहारिकमेव स्वातन्त्र्यं मनुजैः साध्यम् ।

तच्छारीरं हार्दं बौद्धं

सद्राजनैतिकं चार्थम् ।

व्यक्तिगतं राष्ट्रगतं

परिवारगतं समाजलोकगतम् ॥२१॥

आधिव्याधिरहितं सुखमयं जीवनं शारीरं हार्दञ्च स्वातन्त्र्यम् । यथेच्छं ज्ञानविज्ञानोपार्जने साधनानां सुलभत्वं निरोधराहित्यञ्च बौद्धं स्वातन्त्र्यम् । सकलजनतायोगक्षेमोपयुक्तमपराधीनमार्यजुष्टं च प्रशासनं राजनैतिकं स्वातन्त्र्यम् । सद्राजनैतिकमिति भोगमोक्षोभयानुकूलम् । सर्वेभ्योऽपि जनेभ्यः समुचितवृत्त्युपार्जनेऽनुकूलपरिस्थितिजनकमार्थं स्वातन्त्र्यम् । सर्वमप्येतद् व्यक्त्यादिगतत्वेन बहुविधम् ।

तत्रापि तु राष्ट्रगतं मुख्यं

सर्वस्य भित्तिभूतत्वात् ।

राष्ट्रे खलु परतन्त्रे स्वातन्त्र्यं

नैव लभ्यते किमपि ॥२२॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

राष्ट्रस्य राजनैतिक्या आर्थिक्या च दृष्ट्या पराधीनत्वाभावः, स्वयं पर्याप्तत्वम्, सुप्रशासनप्रशासितत्वञ्च मुख्यं राष्ट्रगतं स्वातन्त्र्यम्। तदेव सर्वेषामप्यपरेषां व्यावहारिकाणां स्वातन्त्र्याणां पारमार्थिकस्य च स्वातन्त्र्यस्यावाप्तेराधारभूतत्वेन सर्वेषु मुख्यम्। किमपीति-व्यावहारिकं वा पारमार्थिकमपि वा। बाहुल्येनैतदुक्तम्।

तस्माद्राष्ट्रं पूर्वं कार्यं
सुजनैः स्वतन्त्रताशालि।
येनेतरविधमखिलं स्वातन्त्र्यं
लभ्यतामियात्सुतराम् ॥२३॥

सुजनैः प्रथमं स्वं राष्ट्रमेव सर्वप्रकारकपरमुखप्रेक्षित्वरहितं, सर्वथा स्वयंपर्याप्तम्, सुशासनशासितम्, ईतिशोषणादिपरिमुक्तं विधेयम्। राष्ट्रे तथा सम्पन्ने सत्येवेतरविधमखिलं स्वातन्त्र्यं सम्यग् लभ्यं भवेत्।

राष्ट्रे ततः स्वतन्त्रे प्राप्यं
शिष्टं सदार्यजुष्टपथा।
रक्तिः स्वभावभूते स्वातन्त्र्ये
साधु वर्धनीया च ॥२४॥

स्वतन्त्रे—सर्वेभ्योऽपि जनेभ्यो व्यावहारिकस्वातन्त्र्यप्राप्त्यवसरप्रदानाय सुसमर्थे राष्ट्रे। शिष्टम्-अन्यप्रकारकं सर्वं स्वातन्त्र्यम्। आर्यजुष्टेन

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

धर्म्येण पथा, नाधर्म्येण। आर्यजुष्टेनपथा सदैव प्राप्यम्, सद्भिश्चार्यजुष्टेन सेवितेन पथा प्राप्यमिति नासद्भिर्जुष्टेनेति। व्यावहारिकस्वातन्त्र्योपभोगेन सममेव दर्शनशास्त्राद्यभ्यासेन स्वभावभूतस्य स्वातन्त्र्यस्याभिव्यक्तये क्रमेण रुचिर्वर्धनीया ।

जीवे तु तदा देवः सदाशिवो-
ऽनुग्रहं मनाक् कुरुते ।
रज्यति ततः स शास्त्रे
गुरुशुश्रूषाप्रवृत्तिमपि लभते ॥२५॥

स्वभावभूते स्वातन्त्र्ये रुचिवर्धनसमकालमेव जीवे सदाशिवस्य भगवतोऽनुग्रहशक्तिपातः सञ्जायते। तत्प्रभावेण स जीवः शास्त्राभ्यासे गुरुचरणसेवायाञ्च रुचिमान् भवति। मनागिति—प्रायः प्रथमतो मन्द एवानुग्रहशक्तिपातो विधीयते भगवता । क्रमेणैव प्रायोऽसौ वर्धते । स्वभावभूते स्वातन्त्र्ये रुचिवृद्धिरपि मूलतः पारमेश्वरानुग्रहारम्भत एव समुदेति।

क्रमशश्चैवारोहन् क्षपयन्
मौलं मलं शनैर्घोरम् ।
नैर्मल्यं समवाप्तो झगिति
शिवत्वं निजं स संवित्ति ॥२६॥

CC0. Vasishtha Tripathi Collection. Digitized by Siddhanta eGangotri Gyaan Kosha

प्रायेण क्रमश एव साधकस्य मलप्रक्षालने सञ्जाते तस्य नैजः शिवत्वरूपः स्वभावो झगिति—साश्चर्यं सचाकचक्यञ्च प्रथममचिरद्युतिवत् प्रकाशते, येनासौ कृतकृत्यतामनुभवति मनाक् । अभ्यासवशाच्च तस्य शिवत्वाभिमानो दृढतां रूढत्वं चापद्यते । परं तीव्रतरानुग्रहपवित्रितस्य साधकस्य मलक्षयः सद्य एव सम्पद्यते येनासावक्रममेव शिवत्वं निजं साक्षात्कुरुते । मलञ्च तस्य मौलं मूलभूतं, जावभावाविर्भावसमकालमेवाविर्भूतम् । तच्च मूलतः आणवं, विकासे मायीयं, प्रवृद्धौ च कार्ममिति त्रिप्रकारकमग्रे प्रतिपादयिष्यमाणम् ।

तत्संवेदनवशतः सकलं
स्वविलासकल्पितं पश्यन् ।
स्वातन्त्र्यं परिपूर्णं
भुञ्जानो जयति देहयोगेऽपि ॥२७॥

स्वस्वरूपसंवेदनस्याभ्यासेन तस्य सम्यग् हृदयङ्गमीभावे जाते सर्वं जगत् स्वैश्वर्यविलासोद्भासितं स्वात्ममयमेव पश्यन् साधको जीवन्मुक्तत्वमाप्नोति । तद्दशायां देहसम्बन्धे वर्तमानेऽपि पूर्णप्रायं पारमार्थिकं स्वातन्त्र्यमुपभुङ्क्ते । सर्वथा पूर्णस्य स्वातन्त्र्यस्य भोगस्तु देहपाते सति विदेहमुक्तावेव । अतः परिपूर्णत्वेनात्र परिपूर्णप्रायत्वमेव वेद्यम् । सैषा तस्य जीवन्मुक्तिः ।

अत एव हि धर्मफलं
द्विविधं वैशेषिके समुद्दिष्टम् ।

CC0. Vasishtha Tripathi Collections. Digitized By Siddhanta eGangotri Gyaan Kosha

ईशावास्योपनिषद्वाक्यं
चाप्येवमाह सुस्पष्टम् ॥२८॥

अत एवेति-व्यावहारिकस्य पारमार्थिकस्य चोभयरूपस्य स्वातन्त्र्यस्योपादेयत्वात् । "यतोऽभ्युदयनिःश्रेयससिद्धिः स धर्मः"। इति हि वैशेषिकं सूत्रम् । अत्राभ्युदयो व्यावहारिकं स्वातन्त्र्यम् । पुण्यलोकगतेरपि व्यावहारिकत्वादेव । निःश्रेयसं मोक्षः । स च पारमार्थिकस्वातन्त्र्यमेव वस्तुतः। अपवर्गादिर्मोक्षाभासमात्रत्वात्। उपनिषद्वाक्यञ्च विद्याविद्ययोरुभयोरुपास्यत्वोपदेशकम्। तत्राविद्यया व्यावहारिकं स्वातन्त्र्यं विद्यया च पारमार्थिकं स्वातन्त्र्यं लभ्यमित्यभिप्रेतम् । उभयं चोपास्यत्वेनोपदिष्टम् । तच्च वाक्यम् "अन्धं तमः प्रविशन्तीत्यादि" ।

अत्र कारिका: २८ पूर्वाभि:सह १५९

इति श्री स्वातन्त्र्यदर्पणे सटिप्पणे
स्वातन्त्र्यसिद्धान्तनिरूपणाख्यमाह्निकम
अष्टमम् ।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अथ

नवममाह्निकम्

# प्रमातृभेदनिरूपणम्

मालिन्यं यत् प्रोक्तं तत्
स्वातन्त्र्यप्रकल्पनोल्लसितम् ।
स्वातन्त्र्यमेव हानि-
र्मालिन्यस्य त्रयश्च मलभेदाः ॥१॥

शास्त्रेषु यन्मालिन्यं जीवस्योक्तं तद्वस्तुतः परशिवस्य स्वातन्त्र्येणैव कलितं सच्चकास्ति । ततस्तत्तस्यैव स्वातन्त्र्येण यत् प्रकल्पनं तस्योल्लसितम्—उल्लासः, कल्पनात्मको वोल्लासः । ततो मलोल्लासः पारमेश्वरस्वातन्त्र्यविलास एव नान्यत् । मलापहानिरपि स एव । विलासस्यैवाङ्गद्वयमेतत् । मलोल्लासस्तस्य पूर्वाङ्गं मलापहानिश्चापराङ्गम् ।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

सङ्कोच आणवः स्यान्मायीयो
भेददृष्टिरिति कथितः ।
कार्मस्तु पुण्यपापे
संसृतिमूले मलत्रयं ह्येतत् ॥२॥

शुद्धा परिपूर्णा च पारमेश्वरी संविद् वस्तुतः परिपूर्णबोधात्मिका-प्येकतो, अपरतः पुनः परिपूर्णविमर्शात्मकस्वातन्त्र्यस्वरूपा च । तस्याः पूर्णप्रकाशविमर्शसामरस्यस्वरूपत्वात् एवं सत्यसौ स्वैश्वर्यविलासतः कदाचित् क्वचिद् विमर्शप्राणं निजं परतरं पूर्णकर्तृत्वमयं स्वातन्त्र्यं निगूह्य केवलं शुद्धमनीश्वरं प्रकाशमात्रमेवात्मत्वेनाहमित्यभिमनुते, कदाचिच्च क्वचिन्निजं प्रकाशात्मकत्वमेव निगूह्य कर्तृतासहितं शून्यप्राणादिकं जडमेव वस्तु आत्मतयाभिमनुतेऽहमिति । तदयं द्विप्रकारकः परसंविदः स्वरूपसङ्कोच एव द्विविध आणवो मलः क्रमेण विज्ञानाकलेषु प्रलयाकलेषु च विजृम्भते । भेददृष्टिस्वरूपेण मायीयेन मलेन प्रमाता प्रमेयात्, प्रमेयं प्रमेयान्तरात्, प्रमाता च प्रमात्रन्तराद् भेदेन भाति । केवलश्चासौ मायीयो मलो विद्येश्वरेषु चकस्ति । शरीरप्राणबुद्धिशून्यात्मकस्य सङ्कुचितस्य भेददर्शिनश्च मायीयस्य प्रमातुः पुण्यपापादिषु यः कर्तृत्वाभिमानोऽसावेव, याश्च तदभिमानजन्यास्तस्य कर्मवासनास्ता एव च तस्य सकलस्य प्राणिनः कार्मो मलः । अयं कार्मो मलः संसृतेः साक्षात् कारणम् ।

आरोहन्नवरोहन् स्वैरं

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

मलतारतम्यतो देवः ।

सकलपदादकलान्ता

भजतेऽमूर्मातृभूमिकाः सप्त ॥३॥

सप्तेति—शैवशास्त्रे प्रसिद्धाः—अकल-मन्त्रमहेश्वर-मन्त्रेश्वर-मन्त्र (विद्येश्वर)-विज्ञानाकल-प्रलयाकल-सकलस्थितिरूपाः। अकलस्तु सर्वथा निर्मलः। मन्त्रेश्वरमन्त्रमहेश्वरा-वाणवादिमलत्रयोत्तीर्णाविति शुद्धौ। परं बीजावस्थया स्थितस्य मायीयस्य मलस्याङ्कुरायमाणतेव तयोरित्यकलापेक्षया तावशुद्धावपीति शुद्धाशुद्धौ। मन्त्रापरपर्यायेषु विद्येश्वरेषु केवलस्य मायीयस्य मलस्य स्थितिरिति ते मन्त्रेशाद्यपेक्षयाऽशुद्धाः परं सकलाद्यपेक्षया शुद्धत्वात्तेऽपि शुद्धाशुद्धा एव। विज्ञानाकलेष्वाणवोऽपि मलः। प्रलयाकलेषु कार्मोऽपि। परमसौ तत्र सुषुप्त इवेति न तत्कालं संसृतिप्रदः। त्रयोऽपि निजनिजफलदाः मलाः केवलं सकले। तदमी सकल-प्रलयाकल-विज्ञानाकलाः समलाः। सकलेषु मलः स्थूलतरः, प्रलयाकलेषु किञ्चित्-स्थूलो, विज्ञानाकलेषु च सूक्ष्मः। मन्त्रेषु सूक्ष्मतर एव॥

आदेवान्तं सकलास्त्रि-

मलजुषः संसृतौ सदा मग्नाः।

प्रलयाकलाश्च शून्ये श्रान्ता

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

मुक्ताश्च भाविकल्पास्तम् ॥४॥

देवा अपि मनुजादिवत् संसृतिभाज एव। केवलं सूक्ष्मशरीरत्वं दीर्घदीर्घतरजीवित्वं च तेषां मुख्यौ विशेषौ। तेषां त्रयोऽपि मलाः। ततस्तेऽपि सकलाः। कल्पान्ते कार्यकरणतत्त्वानि यदा मूलप्रकृतौ लीयन्ते तदा सर्वे सकलाः जीवाः सुषुप्तिपदं प्रविशन्ति। ततस्ते तत्कालं प्रलयाकलीभवन्ति। शून्यतत्त्वे प्राणतत्त्वे वा विश्रान्ताः अपवर्गनिर्वाणादिभाजोऽपि जीवाः प्रलयाकलाः। ते तु कल्पान्तात् पूर्वमेव सुषुप्तौ विश्रान्ताः संसृतिराहित्यं च प्राप्ताः भवन्ति। परन्तु कल्पान्तकालानन्तरं यदा भगवान् श्रीकण्ठनाथोऽभिनवसृष्ट्यर्थं प्रकृतितत्त्वं क्षोभयति गुणवैषम्यसम्पादनार्थं तदासौ निर्वाणादिभाजः प्रलयाकलान् प्रलयेन च प्रलयाकलतां प्राप्तान् सकलान् सर्वानपि जीवान् सुषुप्तेर्बोधयति। सुषुप्तेर्बुद्धाः निर्वाणादिभाजः श्रीकण्ठानुग्रहान्मन्त्रादिस्थितिं लभन्ते, प्रलयेनाकलतां प्राप्ताश्च पुनर्जागृताः सन्तः पूर्वकल्पीयकर्मानुसारं पुनः संसृतिं सेवितुमारभन्ते। ततः सर्वे प्रलयाकलाः बद्धा अपि भाविकल्पान्तं संसृतेर्मुक्तास्तिष्ठन्ति, न च ते सर्वथा सर्वदा च मुक्ताः। ततस्तेषां मुक्तिर्मुक्तेराभास एव।

शुद्धप्रकाशमात्राः स्पन्दन-
शून्याः परस्परं भिन्नाः।
विज्ञानाकलनाम्ना
विख्याताः शून्यकल्पपरमार्थाः ॥५॥

क्रियास्वातन्त्र्यरूपैश्वर्यशून्यं यत्प्रकाशमात्रं तदेवात्मत्वेन मन्यमानाः, अत एव स्फुरत्तारूपस्पन्दनरहिताः प्राणिनो विज्ञानाकलाः—विज्ञानमात्रं

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

विश्रान्तत्वेन कलया तत्कार्यैश्च रहिताः। प्रकाशरूपत्वेन नैव शून्यरूपाः। परं विमर्शात्मकचैतन्यचमत्कारेण तत्फलेन चैश्वर्येण रहितत्वेन कैवल्यभाजि-सांख्यपुरुषवत शून्यप्राया एव। शून्यसदृशः परमार्थो येषां ते। एषां परस्परं भिन्नत्वेन मायीयस्य मलस्यपि सूक्ष्मतरोंऽशः। एते विज्ञानकेवला इत्यपि समाख्याताः।

शुद्धाः संविद्रूपाः परस्परं
भेदिनस्तथा वेद्यात्।
विद्येश्वराः सेमुदिता-
स्तेषां विद्या तथैव मायापि ॥६॥

शुद्धबोधात्मकाः क्रियास्वातन्त्र्यात्मकैश्वर्यसमलङ्कृता अपि वेद्यं स्वतो भिन्नमेव मन्यमानाः परस्परमपि भेदेनैव पश्यन्तो विद्येश्वराः। ते एव मन्त्रा इत्युच्यन्ते। स्वस्मिन् स्वरूपे विपर्यासाभावात् ते शुद्धविद्या-स्वामिनः। परं वेद्यविषये विपर्यासस्य भेददृष्टेश्च सत्वात् ते मायीयं मलं भजमाना एव भवन्ति, अप्ररूढया मायथाऽवच्छिन्नाश्चेति। तेषां शुद्धविद्या महामायेत्युच्यते शास्त्रे। एतेषामेक एव मलो मायीय एव।

ईश्वरतत्त्वसुनिष्ठा ये
मन्त्रेशास्तु ते समाख्याताः।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

तदुपरि मन्त्रमहेशास्तत्त्वे

सादाशिवे सुविश्रान्ताः ॥७॥

शुद्धविद्यानूमिकायां तत्त्वद्वये मन्त्रेश्वरमन्त्रमहेश्वराः। मन्त्रेश्वराणां स्फुटः इदमात्मकस्य प्रमेयांशस्याभासो मन्त्रमहेश्वराणां पुनरतीवा-स्फुटोऽसौ। उभयेऽपि शुद्धविद्याभाजः।

अकलोऽसौ शिवनाथो

विलसति योऽनन्तशक्तिपरिपूर्णः।

ब्राह्म्यादि शक्तिपातात्

तस्य ब्रह्मादयो जगद्वन्द्याः ॥८॥

शिवशक्तितत्त्वद्वये स्थिताः शाम्भवाः शाक्ताश्च सिद्धाः अकलाः प्राणिनः। ते च शिवा इत्युच्यन्ते। तेषामहमित्येव स्वरूपम्। सर्वमपि तेष्वहमित्येव। नेदन्ताया मनागप्यवभासस्तेषु। भगवान् शिवो यस्मिन् यस्मिन् स्थूलसूक्ष्मशरीरधारिणि प्राणिनि ब्राह्म्यादीर्निजाः शक्तीः पातयेत् स स प्राणी लोके ब्रह्मादिभिर्भवञ्जगद्वन्द्यतामाप्नोति।

कर्मसुनिरताः सकला

बौद्धाः प्रलयाकलत्वपदभाजः।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

वेदान्तवादनिष्ठाः शान्ता

विज्ञानकेवला बहुलम् ॥९॥

मीमांसकादयः सकला एव भवन्ति। शून्ये प्राणतत्त्वे च विश्रान्ताः बौद्धाः अपवर्गकैवल्यभाजश्च भूयांसो न्याय-सांख्य-निष्ठाः प्रलयाकलतामापद्यन्ते। परं सांख्यादीनां मध्ये ये प्रकाशतत्त्वे दृढमभिमानभाजस्ते विज्ञानकेवलत्वमाप्नुवन्ति। इत्थमेवास्पन्दबोधनिष्ठाः शाङ्कर-वेदान्तिनोऽपि बाहुल्येन विज्ञानकेवलत्वमेव लभन्ते। तेषु विरला एव परिपूर्णां संविदमात्मत्वेन पश्यन्तो मन्त्रादिपदमारोहन्ति।

भागवताद्याः सिद्धा ज्ञेया

विद्येश्वरास्ततः शैवाः।

मन्त्रेशादकालन्ता मन्त-

व्यास्तारतम्यतः सद्भिः ॥१०॥

भागवताः, सिद्धान्तशैवाः, पाशुपताश्च स्वात्मन ऐश्वर्यं संविदन्तोऽपि परमेश्वरादात्मानं भिन्नमेव मन्वानाः सन्तः प्रायशो मन्त्रदशां लभन्ते। मन्त्रा एव विद्येश्वराः। भेदाभेदप्रधानशैवशास्त्रनिष्ठानां मध्ये स्फुटे भेदेऽभेदं पश्यन्तो मन्त्रेश्वरत्वमाप्नुवन्ति, स्फुटे पुनरभेदे भेदच्छायामिव संविदन्तो मन्त्रमहेश्वरत्वं लभन्ते। अभेदशैवशास्त्रनिष्ठा ऐवाकलपद-

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

मारोहन्ति । तदिदं शैवेषु तारतम्यम् । अन्यान्य-शास्त्रनिष्ठा अपि शिवानुग्रहेण प्रायः उत्कृष्टोत्कृष्टतरशासनाश्रयणपुरःसरं क्रमेणाकल-पदमारोहन्त्येव चिरात् ; शैवा पुनः सत्वरमेव, अभेदशैवनिष्ठास्तु सद्य एवेति तेषां परस्परं विशेषः ।

जीवनशक्तिः प्राणः स एव
मातेह सर्वभूमिगतः ।
सकलादकलं यावद्
विजृम्भते पञ्चभिर्निजै रूपैः ॥११॥

प्राणनं जीवनमेव प्राणः । प्राणस्तु चैतन्यस्पन्दनात्मकः संविद एव बहुप्रकारकं रूपान्तरम् । ततः स प्राण एव सकलादकलं यावत् सर्वासु भूमिषु प्रमाता ।

कायिकवाचिक-बौद्धास्त्यागाः
प्राणो ग्रहास्त्वपानः स्यात् ।
मध्ये यो विच्छेदस्तयोः
समान इति सम्मतः सिद्धैः ॥१२॥

हस्तपादादिकृतास्त्यागा ग्रहाश्च कायिकाः । वाचा पदानामन्तरुपा-दानं बहिरुच्चारणञ्च वाचिको ग्रहत्यागौ । बुद्धौ विकल्पानां लयोदयौ

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

बोद्धौ ग्रहत्यागौ । एवमेव प्रश्वासनिःश्वासौ प्राणीयौ त्यागग्रहौ । तौ कायिकावपि गणयितुं शक्यौ । आणवोपाये तावेव प्रायशो योगाभ्यासस्यालम्बनतां नीयेते । एते विविधास्त्यागा एव प्राणः, ग्रहाश्चापानः । ग्रहो ग्रहणमात्मसात्करणम् । मध्ये त्यागादनन्तरं ग्रहाच्च पूर्वं, ग्रहाद्वानन्तरं त्यागाच्च पूर्वं क्षणिकायां सुषुप्तौ निद्रादिकृतायामपि वा प्रलयाकलपदसम्बन्धिन्यामपि वा सुषुप्तौ समान नाम्नः प्राणस्य व्यवहारः । त्यागग्रहणरूपयोः प्राणापानयोरुभयात्मकः प्राणः समानः । समाने प्राणापानौ समौ भूत्वा तिष्ठतः । तत एव तावुदयं लभेते तत्रैव च लीयेते ।

"हृदि प्राणो गुदेऽपान" इत्यादिरूपा तार्किकादीनां कल्पना स्थूलतराऽऽयुर्वेदानुसारिणी च । इयं च शैवी परिभाषा सिद्धजनानुभूत्यनुसारिणी सूक्ष्मतरकल्पनाश्रिता च ।

मध्योर्ध्वगाम्युदानो
वह्निमयः प्लोषको विकल्पानाम् ।
व्यानश्च विश्वपूर्णः परो
विमर्शो मतो महेशस्य ॥१३॥

सौषुम्नेन मध्यमार्गेणोर्ध्वं सहस्रारचक्रं प्रति गमनशीलो विश्वविकल्पप्रदाहकश्चिद्वह्निरूपो विकल्पजालप्रशमनस्वभावः प्राणः उदानः । सर्वतः सर्वथा च यः परिपूर्णो विश्वनिर्भरोऽहमिति संविन्मात्रसारः पारमेश्वरः सततोदितः परः स्वात्मविमर्शः स तु व्यानाख्यः प्राणः ।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

जाग्रत्स्वप्नपदस्थे सकले
प्राणो यथा तथापानः ।
प्रलयाकले सुषुप्तौ समान-
रूपो विजृम्भते प्राणः ॥१४॥

मर्त्याः जाग्रत्पदस्थाः सकलाः, देवादयश्च स्वप्नपदभाजः सकलाः । उभयत्रापि प्राणापानयोरुभयोर्व्यापारः समुल्लसति । सुषुप्तिपदे विद्यमानेषु प्रलयाकलेषु समानस्यैव केवलस्य व्यापारः । प्राणे शून्ये वा जडे तत्त्वे विश्रान्तिरेव तस्य स्वरूपम् ।

आसादाख्यं च तत-
स्तुर्यपदे जृम्भणं ह्युदानस्य ।
तुर्यातीते च शिवे
व्यानाख्यो जृम्भतेऽकले प्राणः ॥१५॥

विज्ञानाकल-मन्त्र-मन्त्रेश्वर-मन्त्रमहेश्वराः प्राणिनस्तुर्यदशाभाज उदानाख्येन प्राणेन व्यवहरन्ति । चतसृणामपि जाग्रदादीनां दशानाम· वान्तरा अपि भेदाः भवन्ति । तत एकस्यामपि तुर्यदशायां तारतम्येन विज्ञानाकलादीनां स्थितिः, तारतम्येनैव चोत्कृष्टोत्कृष्टतरादेरुदानस्य त

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

तत्र व्यापारः। अकलास्तुर्यदशाया उत्कृष्टतमे सोपाने स्थितास्तुर्यातीतमपि पदं मनाक् स्पृशन्ति। तत एव ते तुर्यातीतपदभाज एवात्रोक्ताः। तच्च पदं न दशासु परिगणनार्हम्। सर्वासां तासामुदयास्तमयभूमित्वात्तस्य।

भिन्नस्यैव हि जगतः

सृष्टौ कृत्येऽधिदैवतं ब्रह्मा।

तस्यैव स्थितिकृत्ये

विष्णू रुद्रस्तु भेदसंहारे ॥१६॥

स्वात्मनः सकाशाद्भेदेनावभासमानस्य चतुर्दशभुवनादिरूपस्य जगतः परमाणुभ्यो या सृष्टिस्तत्राधिष्ठातृकारणं ब्रह्मा। एवंविधस्यैव जगतः स्थितिकृत्याधिष्ठाता विष्णुः। भेदमयानां तत्त्वानामभेदरूपतायां कारण-तत्त्वेषु वा कार्यतत्त्वानां संहरणकृत्येऽधिष्ठातृकारणं रुद्रः। रुद्राश्च भूयांसोऽधराधरतत्त्वानामुत्तरोत्तरतत्त्वेषु संहरणकर्तारः पृथ्वीतत्त्वात् कञ्चुक-तत्त्वान्तमधिकारिणः॥

ईशः पिधानकृत्ये

सादाख्योऽनुग्रहे च पञ्चमके।

कारणपञ्चकमेतद्विज्ञेयं

लोक शास्त्रविख्यातम् ॥१७॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

पिधानं हि संविन्मात्रस्य स्वरूपस्य पारमैश्वर्यात्मकस्य च स्वस्वभावस्याधिकाधिकमपहस्तनमधोऽधो पातनञ्च बन्धनगर्त्तेषु, अनुग्रहश्च विस्मृतयोस्तयोः स्वस्वरूपस्वस्वभावयोः पुनः प्रत्यभिज्ञापनम् । ईशः ईश्वरभट्टारकः पिधानकृत्यकारी, सादाख्यश्च भगवान् सदाशिवोऽनुग्रहकृत्याधिष्ठाता ।

अत्र कारिकाः = १७ पूर्वाभिः सह = १७६

इति श्री स्वातन्त्र्यदर्पणे सटिप्पणे
प्रमातृभेदनिरूपणाख्यमाह्निकं
नवमम् ।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अथ

## दशममाह्निकम्

# प्रत्यभिज्ञोपायनिरूपणम्

मोक्षाद्युपायजालं त्रिकादि-

शास्त्रोपदिष्टमिह यत्तु ।

पशुबुद्धेर्वैचित्र्याच्चित्रं

तत् सद्गुरोर्मुखाद् वेद्यम् ॥१॥

त्रिकादीनि शास्त्राणि त्रिक-कौल-मत-दक्षिण-वामादीनि । पशूनां बुद्धेरनन्तप्रकाराद्वैचित्र्याद्धेतोरुपाया अपि विचित्रविचित्राः शिवेन प्रकटिता अधिकारभेददृशा । गुरुमुखात्प्राप्त एवोपायोपदेशः फलदो भवेत् । गुरुशक्तिमहिम्नोपायस्य वीर्यवत्त्वं भवति । उपायरहस्यमपि किमपि गुरुरेव प्रकाशयितुमलं भवति । उपाया इमे यथायथं भोगमोक्ष-साधनाः ।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

सालम्बनो विकल्प-
स्वरूपकः स्यादुपाय इह यो यः ।
कथितोऽसावाणव इति
तस्य ध्यानादयः प्रकाराः स्युः ॥२॥

स्वस्माद् भिन्नानां प्रमेयात्मकानां बुद्धि-प्राण-देह-बाह्यानामालम्बनानामाश्रयं गृह्णन्तो धारणात्मका विकल्प-बुद्धि-स्वरूपा उपाया आणवाः। ध्यानादयस्तेषां मुख्याः प्रकाराः। एते खलूपायाः मानसप्राणीयशारीरक्रियासध्याः सन्तः क्रियोपायाः इत्युच्यन्ते । भेदात्मकं प्रमेयमालम्बनत्वेनाश्रयन्तश्च भेदोपाया इमे ।

शाक्तस्तु विकल्पमयो-
ऽप्यालम्बन-शून्यभावनारूपः ।
अविकल्पसमावेशः
शिवताया शाम्भवः पुनः स्वस्याः ॥३॥

प्रमेयात्मकालम्बनशून्यः "सर्वमहम्, सर्वं मयि, सर्वं मत्तः, सर्वश्चाहम्" इत्यादिरूपः स्वात्मविषये एव सविकल्प-भावनाभ्यासात्मक उपायः शाक्तः । ज्ञानाभ्यास-प्राधान्यादयं ज्ञानोपायः। अत्र च भावनायां आलम्बनं स्वात्मैव। स्वं प्रकाशतत्त्वं वा स्वशक्तीर्वा मातृका-मालिनी-

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

क्रमेण समाश्रित्य इच्छाशक्त्युपयोगतो भावनाभ्यासं विनैव यः स्व-स्वभावभूतायाः शिवतायाः सद्यः समावेशस्तस्याभ्यासः शाम्भवः उपायः। स एवेच्छोपायोऽभेदोपायश्चोच्यते। ज्ञानोपायस्तु भेदाभेदोपायः।

आणव इह मन्दानां
मध्यानां शाक्तभावनारूपः।
तीव्राणां चोपायः शाम्भव
इति चिन्तनेन परिशून्यः ॥४॥

प्रमेयजातस्य यद्वास्तविकं स्वरूपं तद्विषये भावनाभ्यास आणवः। तस्याधिकारिणो मन्दयोगिनः। शाक्तस्तु स्वस्याः विश्वोत्तीर्णतायाः, विश्वमयतायाः, स्वतन्त्रतायाः, परमेश्वरतायाः, इत्यादीनां चान्यासामपि स्वविभूतीनां भावनायाः अभ्यासः। तस्याधिकारिणो मध्यमाः साधकाः। तीव्रतर-बुद्धि-भक्ति-जिज्ञासादि-भाजः साधकाः शाम्भवस्योपायस्याधि-कारिणः। तस्मिन्नुपाये भावनात्मकं चिन्तनं विगलति। भावनाश्रयणं विनापीच्छामात्रस्य प्रयोगेण शिवतायाः सद्यः समावेशोऽभ्यस्यते तत्र। स्वस्वरूपे वा स्थितेरभ्यासोऽसौ निर्विकल्पः।

अतितीव्रभक्तिभाजामिह
झगिति निरर्गलो जगद्धरितः।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अनुपायमेव संविद्रूपः
प्रख्याति पूर्णशिवभावः ॥५॥

झगिति—अचिरद्युतिवत् सचाकचक्यमिव, साश्चर्यं सचमत्कारञ्च। अर्गलारूपाणां मलानां प्रशान्तत्वात् सद्यः स्वात्मशिवस्य स्वभावभूतः प्रकाशः स्वयमेव तेषां प्रकाशते। परिपूर्णाहंरूपत्वेन तस्य प्रकाशस्य जगद्भरितत्वम्। सर्वं हि विश्वं तत्राहमेव। वृक्ष इव बीजावस्थायां बीजमेव। विनैव धारणाभावनेच्छादि-प्रयोगं स्वत एव परिपूर्णसंविदात्मकः स्वात्मा तेषां प्रकाशतेऽनुपायमेव। एप ताव-दानन्दोपाय इति वाऽऽनन्दयोग इति वोच्यते। यतोऽत्र जगदानन्दः स्वयमेव परिस्फुरति। अत एवानुपाययोग इत्यप्यस्याभिधानम्। योगत्वञ्चास्य—"योगमेकत्वमिच्छन्ति वस्तुनोऽन्येन वस्तुना" इति योग-लक्षणयोगात्। यतो ह्यत्र परिमितापरिमितयोः प्रमात्रोर्जीवशिवयोः सर्वथैक्यं प्रकाशमानमनुभूयते स्वयमेव।

सततं प्रकाशमाने शिवनाथे
स्वप्रकाशपरिपूर्णे।
शुद्धे संविद्रूपे कथमिव
यायादुपायतां मलिनम् ॥६॥

ध्यानाद्याणवमुपायजालं मायामयत्वात् सुतरां मलिनम्। शाक्तोपायोऽपि विकल्पात्मकत्वान् मलिन एव। शाम्भवः शुद्धोऽपि

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

इच्छाप्रयोगापेक्षत्वेन सापेक्षः सन् निरपेक्षपरमशिवसमावेशापेक्षया मलिन एव । परमशिवः स्वयमेव सततं प्रकाशते । उपायास्तस्यैव प्रकाशस्य महिम्ना तल्लीलाविलासत एव प्रकाशन्ते । ततस्तं प्रकाशयितुं न तेऽलम् । ते तावन्मलस्य हानये एवोपयुज्यन्ते न परमशिवस्य प्रकाशने ।

स्वातन्त्र्यस्य विलासः

शिवनाथस्यैव येन तत्त्वं स्वम्

विस्मृतिपथमुपनीतं पुनरपि

सदुपायतः स्मरञ्जयति ॥७॥

स्वस्वातन्त्र्यविलासतः परमेश्वरेण जीवरूपताभासनसमकालमेव स्वं परमेश्वरत्वं मूलभूतेन तिरोधानकृत्येन विस्मारितम्, पुनश्चानुग्रहकृत्येन विस्मृतिमपनीय तत्स्वयमेव स्मरन् कृतकृत्यतामिव लभमानो विजयते । सर्वोत्कर्षेण स एव वर्तते ।

मन्दोऽपि क्रममाणः क्रमेण

तां भूमिकां समभ्येति ।

यत्रोपायापेक्षां विनैव

संवेत्ति पूर्णशिवभावम् ॥८॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

मन्दबुद्धिर्मन्दयत्नो मन्दभक्तिरप्यनेकजन्मसंसिद्धः सन् पर्यन्ते-ऽनुपायमेव शिवसमावेशमाप्नोति । ततो नात्र विषये जनेनाधीरेण भाव्यम् ।

पद्मासने शरीरं सहजसमं
सुश्लथं स्थिरं चित्तम् ।
अवहितमपि निर्विषयं
नासाग्रस्थार्धमीलितां दृष्टिम् ॥९॥

पाणी चाङ्के कृत्वा
पश्यन्नात्मानमात्मनिष्ठः सन् ।
इच्छाप्रयोगवशतः शाम्भव-
माप्नोति सत्समावेशम् ॥१०॥

शाम्भवोपायस्य प्रतिपादनमिदम्—सहजसमम्—स्वाभाविकतया-समकाय शिरोग्रीवम्, न प्रयत्नवशात्तथा । अत एव सुश्लथम्, न तु सुतानितम् । सुश्लथमिति स्थिरमिति च शरीरेण चित्तेन चापि सम्बध्यते । उभयं विश्रान्तमिव निश्चलं च कृत्वेति सम्बन्धः । चित्तं सावधानं न पुनर्निद्रादिवशम्, परं तथापि विषयोन्मुखवृत्तिशून्यं कृत्वा अकिञ्चिच्चिन्तकमिति । दृष्टिमपि श्लथतयैव नासाग्रदिक्पातिनीमर्धनिमीलितनेत्रां

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

कृत्वा, पाणिद्वयमुत्तानं परस्परोपरि धृतमङ्के निधाय, आत्मना संवित्स्वरूपेण, न चित्तादिना, आत्मानं संवित्स्वरूपमेव न देहादिकं, स्वयं स्वप्रकाशतया साक्षात्कुर्वन्। आत्मनिष्ठो न पुनरान्तरवाह्यविषयचिन्तनपरः। तीव्रेणेच्छाशक्तिप्रयोगेण शाम्भवं समावेशमाप्नोति—स्वात्मनः पशुप्रमातृतां परमशिवतायां तत्कालं निमज्ज्य शिवभावेन तिष्ठति। अनुपायपदोन्मुखः उत्कृष्टतरोऽयं शाम्भवोपायः। बौद्धानां जैनयोगे बुद्धिः सौषुप्तपदे लीना भवति। अत्र तु साऽवहितैव न तु सुषुप्तिलीना, ततस्तुर्यदर्शननिमग्नेति वेद्यम्॥

आदिक्षान्त-विमर्शैः शक्ती-
स्त्वथवा निजाः प्रकाशे स्वे।
प्रतिबिम्बिताः प्रपश्यन्
तत्त्वव्रातात्मकेन रूपेण ॥११॥

स्वात्मानं शिवरूपं
साक्षात्कुरुते समाविशन् सद्यः।
इच्छोपायः सोऽयं शाम्भव-
नामा परात् परो योगः ॥१२॥

अपरस्तु शाम्भवोपाय एवम्—अकारादिक्षकारान्तानां मातृकावर्णानां विमर्शेन साकं स्वात्मीयाः शक्तीरेव शिवादिधरण्यन्ततत्त्वसमूहात्मकेन रूपेण स्वात्मनि प्रतिबिम्बिताः, विमृशन् स्वात्मानं च स्वशक्तिमाहात्म्येनैव समस्ततत्त्वप्रतिबिम्बखचितं तत एव विश्वात्मकं पश्यन् सद्य एव स्वात्मशिव-

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

भावस्य स्वस्मिन् समावेशमनुभवति योगी। एष उभयप्रकारको निर्विकल्पक इच्छाशक्तिप्रयोगाभ्यास एव साक्षात् स्वरूपलाभोपायः। तत एव परेभ्यो ज्ञानयोगप्रकारेभ्योऽपि परः शाम्भवोपाय-नामायं योगः। ज्ञानक्रिययोरत्र मनाक् सहकारित्वमात्रम्।

विश्वमिदं भावनया
स्वशक्त्यभिव्यक्ततामयं पश्यन्।
विशति सुखेन शिवत्वं
ज्ञानोपायः स शाक्तयोगाख्यः ॥१३॥

भावना तावत् सततगत्या क्रियमाणा सुदृढा बौद्धा कल्पना सविकल्पज्ञानरूपा। सर्वं मयि, अहं सर्वत्र, इत्यादिरूपस्य यथार्थस्य विकल्पज्ञानस्याभ्यासेन योगी क्लेशबहुलप्राणायामादिकलनायासेन विनैव सुखोपायेन शिवभावं प्रविशति। सोऽयं ज्ञानोपाय एव शाक्तोपाय इत्युच्यते। अत्रापि क्रिया सहकारिणी, पर्यन्ते चेच्छाशक्तिप्रयोगोऽप्यत्र विधीयत एव, परं तथापि प्राधान्यमत्र विकल्पात्मकस्य यथार्थज्ञानाभ्यासस्यैव।

अस्य च भेदा मुख्या
यागो होमो जपो व्रतं योगः।
यत्राक्रमतो विश्वं भावनया
चिन्मयं स्फुटं भाति ॥१४॥

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

यागो, होम, इत्याद्यास्तु पारिभाषिक्योऽत्र संज्ञाः, न पुनरग्निहोत्रादिरूपाः उपाया अत्राभिप्रेताः । एषु यागादिषु तत्त्वभुवनभावादि सकलमपि सामान्याकारं समष्टिरूपं विश्वं युगपदेव चिन्मयत्वेन स्वात्मरूपमेव क्रमराहित्येन साक्षात्क्रियते भावनाभ्यासबलेन ।

चिद्वह्नौ परमेशे समस्त-
भावार्पणं स्मृतो यागः ।

भावनया स्वात्मस्वरूपे चिदग्नौ विश्वभावसमर्पणं ज्ञानयोगमयो यागो भवति ।

संविज्ज्वालापुञ्जे
भावनया विश्वलापनं होमः ॥१५॥

ज्ञानयोगात्मकस्य होमस्याभ्यासी स्वात्मरूपायाः शुद्धायाः संविदो देदीप्यमानासु प्रकाशज्वालासु सकलं विश्वं भावनया युगपद् विलापयन् शिवसमावेशं लभते ।

शुद्धः परिपूर्णो यः
परशिवतत्त्वस्य संविदाभासः।
तस्य विकल्पाभ्यासः पुनः
पुनर्यः स एव जपयोगः ॥१६॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

परमः शिवस्तु वस्तुतः शुद्धापरिच्छिन्नपरिपूर्णाद्वैतसंविदात्मकः। एवंविधस्य पारमेश्वरस्य स्वभावस्य विकल्पज्ञानेन पुनः पुनरामर्शनं ज्ञानयोगमयो जपः।

परशिव-समतादृष्ट्या व्रतं
हि विश्वावलोकनं स्पष्टम्।

सर्वत्र स्थावरे जङ्गमे वा, जडे चेतने वा लौकिके दिव्ये वा पदार्थजाते समानरूपतया परशिवताया एव दर्शनं शिवयोगिनो ज्ञानयोगसम्बन्धि व्रतम्। विस्तरतः शिवदृष्टौ पञ्चमाह्निके प्रतिपादितोऽयं समताख्यो विषयः श्रीसोमनन्दपादैः।

योऽनुत्तरः परेशः पुनः
पुनस्तत्स्वभावभूतस्य ॥१७॥

परिपूर्ण-शुद्ध-संवित्-
स्वातन्त्र्यस्यावमर्शनं योगः॥

परेशः परमशिवः स च संविन्मात्रस्वरूपः परमार्थतया। सा च संवित् प्रमेयतास्पर्शराहित्याच्छुद्धा, सर्व-सहत्वात् सर्वरूपत्वाच्च परिपूर्णा अनवच्छिन्नं पारमैश्वर्यं तस्याः पूर्णं स्वातन्त्र्यम्, यत् परमेश्वरस्य नैसर्गिकस्वभावभूतम्। चेतसा च तस्यैव पुनः पुनर्विमर्शनं योगोऽत्र ज्ञानोपाये।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

इत्थं ज्ञानोपायैः

परशिवभावः प्ररूढिमभ्येति ॥१८॥

एवंविधैर्यागादियोगान्तैरन्यैरपि च पूजनस्नानादिभिरेवंप्रकारैः शुद्धविकल्पज्ञानाभ्यासैः साधकस्य स्वात्मपरमेश्वरभावस्तस्य बुद्धौ संस्काररूपतया रूढो भवति ।

बुद्धिं प्राणं देहं बाह्यं

मेयं शिवत्वपरमार्थम् ।

भावनया परिपश्यन्

विशेच्छिवत्वं क्रमेण यद् योगी ॥१९॥

योगः स आणवाख्यः

क्रियाप्रधानो बहुप्रभेदोऽसौ ।

तत्तत् प्रमेय-विशेषा-लम्बनाः धारणाः आश्रित्य तत्र तत्र प्रमेये यः शिवत्वभावनाया अभ्यासस्तेनापि शिवभावसमावेशो जायते । परमत्र योगे तां तां तत्त्वदशां क्रमेणोत्तीर्यैव शिवभावे प्रविश्यते । अणुसमाख्यस्य भेददर्शिनो जीवस्य द्वैतदृष्ट्यनुकूलः सन्नयमुपाय आणव इति कथ्यते । धारणादि-मानस-क्रिया-प्रधान-तया चायं क्रियोपाय इत्युच्यते । अत्र भावनांशे इच्छा-शक्तिप्रयोगांशे च विद्यमानेऽपि बाहुल्येन क्रियांश एवाभ्यासविषयः । इत्यतोऽत्र क्रियाया एव प्राधान्यम् । धारणावलम्बनभूतेषु तत्त्वेषु पुरुषस्य समीपतममालम्बनं तस्य बुद्धिः, तदनन्तरं तस्य प्राणस्त-

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

दधस्तस्य शरीरस्थं नाडीचक्रजातम् । दूरतमं च ग्राह्यं संविद्रूपात्स्वस्माद् भिन्नं श्वासवायुरूपं प्रमेयं, स्थूलं शरीरं, बाह्यं प्रमेयञ्च । बाह्यं प्रमेयमपि द्विविधं कालो देशश्चेति । कालधारणा त्रिधा वर्णमन्त्रपदद्वारेण पर-सूक्ष्म-स्थूल-स्थित्या । देशधारणाप्यनेनैव नयेन त्रिविधा कला-तत्त्व-भुवन-स्थित्येत्यग्रेऽभिधास्यते कारिकाभिरेव ॥

ध्यानं प्रथमो भेदः

प्राणोच्चारस्ततः करणयोगः ॥२०॥

ध्वनियोगोऽथ च देहे

श्वासे बाह्ये प्रमेयवर्गे च ।

भावनया शिवभाव-

प्रख्यातिः स्थानकल्पनायोगः ॥२१॥

बुद्धिमालम्ब्य क्रियमाणो योगो ध्यानयोगः । प्राणशक्त्यालम्बन उच्चारयोगः । देहमुद्रालम्बनो देहस्य नाडीचक्रद्यालम्बनश्च करणयोगः । प्राणध्वनिमालम्ब्य क्रियमाणो ध्वनियोगः । स्थूले शरीरे, श्वासप्रश्वासरूपे प्राणवायौ, वर्णमन्त्रपदरूपे कालाध्वनि, कलातत्त्वभुवनरूपे च देशाध्वनि धारणां कृत्वाभ्यस्यमानो शिवभावभावनापरो योगः स्थानकल्पना । एतेषु प्रमेयेषु क्रमेण धारणां निबद्ध्य शिवभावस्य भावना क्रियते । तत्फलतया एतेष्वपि साक्षाच्छिवभावदर्शनं जायते । तेन च साधकः क्रमेण शिवभावे प्रवेष्टुं शक्नोति ।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अग्न्यर्कसोमरूपं संघट्टं
मातृमानमेयानाम् ।
भैरवसंविद्वह्नि काली-
चक्रेण वेष्टितं ध्यात्वा ॥२२॥

प्रमाण-प्रमेय-प्रमातृरूपं बुद्धिगतं त्रिकोणतत्त्वं क्रमेण सूर्य-चन्द्राग्नि-रूपतया भावयित्वा तेषामेकघनरूपः संघट्टात्मको महान् भैरवाग्निस्ततो भाव्यते । ततो द्वादशकालीस्वरूपभैरवशक्तिभिरसौ परिवृतोऽनन्तरञ्च तथाविध एव केनापीन्द्रियद्वारेण बहिर्निस्सृतो भाव्यते ।

तेन च बाह्यं सृष्टं ततः
परं स्थापितं ततश्च हृतम् ।
भावनयाऽनुत्तरतां क्रमेण
सम्प्रापितं ततो विमृशन् ॥२३॥

सृष्ट्यादिकृत्यकरणे पश्यन्
शक्ति निजां शिवीभवति ।
सोऽयं ध्यानसमाख्यो योगः
शैवः शिवत्वफलदायी ॥२४॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

शक्तिचक्रयुतेन भैरवाग्निना सर्वमपि बाह्यमेकैकं वस्तु क्रमेण सृष्टं, स्थापितं संहृतं, शिवभावञ्च सम्प्रापितं भावनया यदा योगी सुचिरं पुनः पुनर्विमृशति, तदा तस्य स्वीयानां सृष्ट्यादिकृत्यकारिणीनां पारमेश्वरीणां शक्तीनां साक्षात्कारे जाते सति स शिवत्वमासादयति, समाविशति चाभ्यासकाले शिवभावम्। अयं बुद्धिमालम्ब्य प्रयुज्यमानो योगः सर्वोत्कृष्ट आणवोपायः।

जीवन शक्तौ प्राणे पञ्च-
विधा वृत्तयः पृथक् प्रोक्ताः।
ता एव समालम्ब्य प्राणो-
च्चारेषु सावधानतया ॥२५॥

आनन्दभूमिकाः षट्
क्रमेण सङ्क्रम्य यत् परो योगी।
जगदानन्दास्वादाद् विशे-
च्छिवत्वं परं तु पर्यन्ते ॥२६॥

प्राणापानसमानोदानव्यानाख्याः पञ्च प्राणवृत्तयः पूर्वं निरूपिता एव। प्राणोच्चारमध्ये तास्वेव वृत्तिषु सुसावधानो योगी प्राणशक्ते-राधारभूतं संविदानन्दं प्राणवृत्तिमध्य एव विचिनुते। तद्वशाच्च क्रमेण निजानन्द-निरानन्द-परानन्द-ब्रह्मानन्द-महानन्द-चिदानन्दाख्याः षडानन्द-भूमिकाः समतिक्रम्य ततःपरं परिपूर्णपरमेश्वरताचमत्कारात्मकमनव-च्छिन्नं जगदानन्दमनुभवति। तमनुभवन्नेव शिवत्वसमावेशभाग् भवति। षडानन्दभूमिकानां स्वरूपं विस्तरतस्तन्त्रालोकतन्त्रसारादौ द्रष्टव्यम्।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

प्राणोच्चारसमाख्यो
योगः सोऽयं निरूपितः शैवे ।
स्वादः प्लुतिः सुकम्पो
निद्रा घूर्णिर्भवन्ति योगेऽस्मिन् ॥२७॥

प्राणोच्चारयोगस्य सर्वेषु प्रकारेषु आनन्दास्वादः शरीरस्य उत्कूर्दनम्, कम्पः, निद्रा, घूर्णनञ्च शिरसो जायन्त आनन्दचमत्कारातिरेकवशात् । एतान्यस्य योगस्यानुभूतेश्चिह्नानि बाह्यानि ।

मुद्राविशेषसंस्थे देहे
चक्रेषु चापि नाडीनाम् ।
भावनया शिवभावं
पश्येद्यदसौ भवेत्करणयोगः ॥२८॥

खेचर्यादिमुद्राभ्यासो देहस्थनाडीचक्रसम्बन्धी च कुण्डलिनीयोगः शैवे करणयोग इति कथ्यते । मुद्राविशेषसंस्थे देहे नाडीचक्रानुचक्रेषु च शिवभावभावनया योगी शिवत्वं समाविशति । मुद्राः अत्र भावना-सहकारिण्यः ।

प्राणध्वनिमव्यक्तं वर्णं
शृण्वन् प्रकल्पयँस्तस्मिन् ।
मन्त्रांस्ततः शिवत्वं पश्यन्
ध्वनियोगभाग् भवेद् योगी ॥ २९ ॥

कर्णौ पिधाय प्राणवृत्तिजनितः कोऽप्यव्यक्तो ध्वनिः श्रूयते । स एवात्र योगे वर्णं इत्युच्यते । योगी तं शृण्वंस्तत्र सृष्टिसंहारादिबीजरूपान्

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

मन्त्रान् भावनया प्रकल्पयति। तदभ्यासेन मन्त्राभिव्यग्यार्थभावनासाहित्येन च तस्य शिवत्वसाक्षात्कारो जायते। सोऽयं वर्णालम्बनको ध्वनियोगः।

कालाध्वा देशाध्वा बाह्ये
स्थाने उभे च भिद्येते।
पदवर्णमन्त्रभेदैः कालो
देशः कलाभुवनतत्त्वैः ॥३०॥

कालस्तु स्वयं न कश्चन स्वतन्त्रः पदार्थः। दीर्घदीर्घतराणां क्रियाणामङ्गभूतानां कायिकवाचिकबौद्धानां परिस्पन्दानां यत् पौर्वापर्यं तस्य यो क्रमः स एव काल इति व्यवह्रियते मायाक्षेत्रे पशुप्रमातृभिः। एवमेव मूर्तिवैचित्र्याश्रितो योऽविततविततादिरूपोऽवभासो बाह्यपदार्थानां तदाश्रितः काल्पनिकः क्रम एव देशः। सूक्ष्मतमः कालांशस्तावत् क्षणः। यावच्चित्ते एको विकल्पस्तिष्ठति तावन्मात्रे काले क्षण इति व्यवहारः। एवं कालक्रमाधारभूतो ज्ञानक्षणानां क्रमः। ज्ञानानि च शब्दनात्मकेन विमर्शेन परिच्छिन्नानि। शब्दनञ्च निर्विकल्पं सविकल्पञ्च। निर्विकल्पं सूक्ष्मतरंशब्दनं वर्णैर्विधीयते सूक्ष्मञ्च बीजमन्त्रैः। स्थूलं विकल्पात्मकं शब्दनं पदैर्विधीयते। तदेवं कालिकस्य क्रमस्य वर्ण-मन्त्र-पदात्मकत्वेन कालाध्वा परः (सूक्ष्मतरः), सूक्ष्मः, स्थूलश्चेति त्रिधा। देशक्रमोऽपि त्रिधा। स्थूलो भुवनात्मा, सूक्ष्मस्तत्त्वात्मा, परश्च कलात्मा। भुवनानां सूक्ष्माण्युपादानानि तत्त्वानि, तत्त्वानामपि सूक्ष्मतरं परं स्वरूपं कलाः। पञ्चकला एव विकासमाप्य षट्त्रिंशत्तत्त्वरूपतामापद्यन्ते। स एष वर्ण-मन्त्र-पद-कला-तत्त्वभुवनात्मा षड्विधः स्थानकल्पनविस्तरः। षडपि स्थानानि भावनात्मकस्य योगस्या-लम्बनत्वं नीयन्ते। देहापेक्षया बाह्यन्येतान्यालम्बनानि बाह्यप्रमेयात्मकानि। ध्यानोच्चार-करण-ध्वनयस्तावदाभ्यन्तराणि प्रमेयाण्यालम्ब्य प्रचलन्ति। शाक्तोपाये स्वात्मैवालम्बनम्। आणवोपाये पुनः प्रमेयजातमान्तरं बाह्यञ्चेति सङ्ग्रहः सालम्बनयोगविधेः। शाम्भवस्तु निरालम्बनः स्वप्रकाशस्वात्मसंविद्विमर्शाभ्यास इति।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

सकलं देशाध्वानं पश्यन्
देहे निजे हि भावनया ।
पश्यन् प्राणे कालं विशति
शिवत्वं क्रमेण शिवयोगी ॥३१॥

एकैकशः सर्वाणि भुवनानि, निखिलानि तत्त्वानि, सकलाश्च कला भावनया स्वे स्थूले देहे पश्यन् साधकः देशकृतसङ्कोचराहित्यं लभते । हृदयादारभ्योद्गच्छन् प्राणो मुखाद् बहिरधो द्वादशाङ्गुलपर्यन्तं स्थानं यावत्प्रसरति । तत् स्थानं बाह्यो द्वादशान्तो, हृदयञ्चान्तर्द्वादशान्त इति परिभाष्येते। एतद्द्वादशान्तद्वयमध्ये या प्राणगतिरसौ प्राणोच्चारः इति व्यवह्रियते । वर्ण-मन्त्र-पद-विमर्शैः कल्यमानं क्षण-घटी-प्रहर-दिन-पक्ष-मास-वर्ष-युग-मन्वन्तरकल्पादिरूपं सर्वमपि कालं क्रमेणैकस्मिन् प्राणोचारे भावनया पश्यन् योगी कालकृतसङ्कोचराहित्यमाप्नोति । ततश्च परिपूर्णे स्वात्मनि शिवत्वभावनया शिवत्वसमावेशं लभते । स एष षडध्वधारणायोगः ।

योगक्रमः सुसहजो मुक्तेः
पन्थाः सुनिश्चितः सोऽयम् ।
शैवागमेषु दिष्टः शिवेन
सम्यग् गुरोर्मुखाद् ग्राह्यः ॥३२॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

सुसहज इति—न कष्टतपःसाध्यो नापि प्राणायाम-प्रत्याहारादिक्लेश-युतः । सुनिश्चत इति—यो यो योगमिममभ्यस्येत् स स पर्यन्ते परां मुक्तिं लभेत । कश्चित्सद्य एव, कश्चित्कालान्तरेऽत्रैव जन्मनि, कश्चि-त्क्रमेणोर्ध्वोर्ध्वलोकगत्या, कोऽपि पुनरत्रैव लोके कस्मिंश्चिज्जन्मान्तरे मुच्येत । शिवेनेति श्रीकण्ठनाथेन वोमापतिनाथेन वा स्वच्छन्दनाथा परशरीरेण कैलासवासिना प्रसिद्धेन शिवेन मालिनी-स्वच्छन्द-रुद्रया-मलादितन्त्रेपूपदिष्टोऽयं शिवयोगः । स एप योगस्तत्र प्रतिपादितः सन्नपि गुरूपदेशेन गृहीत एव सम्यक् सफलीभवति । सहजत्वेनास्य स्वाभाविकत्वमपि प्रतिपादितम् । तच्च पर्य्यन्ते शाम्भव एव सुष्ठु संवेद्यते । यतस्तत्र स्वरूपे स्थितिरेवाभ्यस्यते, न किमपि भाव्यते, न चापि कुत्रापि धारणा विधीयते । तत्र स्वस्याः स्वाभाविक्याः मूर्ते-रेवाभ्यासः क्रियते ।

संक्षेपतस्तु सारं तस्य
सुविशदं यदेतदाख्यातम् ।
सरहस्यं मयि भगवाँस्तुष्ट-
स्तेन प्रसीदताच्छम्भुः ॥३३॥

सरहस्यमिति—योगसाधनापरिपाटी-प्रकाशन-पुरःसरम् । मङ्गल-मध्यानीति प्रार्थनात्मकमङ्गलात्मकं पद्यमेतत् ।

भक्तिश्चैका शस्ता
सिद्धेर्मूलं ह्युपायजालानाम् ।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

न विना भक्तिं किमपि क्वापि
हि सिद्ध्यत्युपायकं जन्तोः ॥३४॥

भक्तिमाहात्म्येनैवोपाया अभ्यस्यमानाः फलदा भवन्ति, न तां विना ।

कुर्वन्ति यदाऽघोरा जीवं
शक्तय उपायरुचिशीलम् ।
तस्मिन्नेव निमेषे घोरतराः
पातयन्ति भोगेषु ॥३५॥

पशूनां मलशैथिल्यसम्पादने सहायभूताः शिवशक्तयोऽघोरा नाम । पशूनधोऽधो भोगेषु पातयन्त्यः शिवशक्तयो घोरतराः, घोरतर्यो वा । धर्मादौ रुचिं वर्धयन्त्यः सुखाभिष्वङ्गे च स्थापयन्त्यः शिवस्य शक्तयो घोराः । तदमी त्रयः शक्तिव्राताः विश्वेषां जीवानां बन्धमोक्षादिव्यापारान् सञ्चालयन्ति ।

विघ्नानां प्रशमार्थं भक्ति-
स्तेषां प्रशस्यते शैवे ।
भक्तिर्भुक्तिं मुक्तिं
शिवभावं सर्वतोऽपि वा दद्यात् ॥३६॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

घोरघोरतरशक्तिव्रातकृता विघ्नाः शिवभक्त्या नश्यन्ति । शिव-स्यानन्यं भक्तं न कदापि ताः शिवशक्तयः स्पृशन्ति । अघोरास्तस्य शक्तयः शिवभक्तं मोक्षमार्गे प्रवर्तयन्ति प्रचालयन्ति च तत्र ।

भक्तिस्त्वेव हि परमाऽनुग्रह-
लीला सदा महेशस्य ।
भक्त्या हि शास्त्रबोधो
भक्त्या लभ्यश्च सद्गुरुः शीघ्रम् ॥३७॥

यस्मिन्नेव जीवे शिवोऽनुग्रहशक्तिपातं करोति तस्यैव हृदि तं प्रति भक्तिरुदेति । तीव्रतरेण चानुग्रहशक्तिपातेन भक्तिरतितीव्रता-मापद्यते । परिपूर्णा च पराऽभेदमयी भक्तिरेव "ज्ञानस्य परमा भूमिर्योगस्य परमा दशा" । सैव परा जीवन्मुक्तिः ।

भक्त्या च मन्त्रदीक्षा लभ्या
मन्त्राश्च वीर्यवन्तः स्युः ।
भक्त्या गुरुत्वलाभः किं स्याल्लोके
न यद् भवेद् भक्त्या ॥३८॥

भक्तिपूर्वकमभ्यस्ताः मन्त्राः वीर्यवन्तो भवन्ति । भक्तिमान् योगमार्गे तथा प्रगतिं लभते यथाऽन्येषामपि सद्गुरुर्भवति ।

अत्रकारिकाः = ३८ पूर्वाभिः सह = २१४

—इति श्री स्वातन्त्र्यदर्पणे सटिप्पणे
प्रत्यभिज्ञोपायनिरूपणाख्यमाह्निकं
दशमम् ।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अथ

## एकादशमाह्निकम्

# उपसंहारात्मकम्

अवधार्यैतत् सम्यग्
जनोऽत्र तूर्णं विचिन्तयेदेवम् ।

स्पष्टमिदम् ।

स्वातन्त्र्येण विलासा-
च्छिवभावो विस्मृतो मया स्वीयः ॥१॥

स्वविलासादेव मया निजः स्वाभाविकः शिवभावो विस्मृतिपथे प्रक्षिप्तोऽस्ति ।



CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

तत एव भेददर्शी धर्मा-

धर्मादिशृङ्खलाबद्धः ।

सुखदुःखभोगभागी संसारी

तुच्छशक्तिशीलोऽहम् ॥२॥

आणवान्मलादहं तुच्छशक्तिः, मायीयाद् भेददर्शी, कार्मान्च संसरणशीलः। परमयं त्रिशृङ्खलो बन्धोऽपि मे स्वकीय एव विलासः। स्वविलासवशादेवाहमीदृश्यां दशायामवभासे ।

दिष्ट्याऽनुग्रहशक्तिः शिवेन

सा पातिताधुना तु मयि ।

येन रुचिर्मे शास्त्रे

भक्तिर्मे वर्धतां शिवे सुतराम् ॥३॥

शास्त्रे रुचिः, गुरुं प्रति सश्रद्धा यियासा, शिवे भक्तिः, सुधर्मे रतिः, इत्यादीनि हि पारमेश्वरस्यानुग्रहस्यैव मुख्यानि फलानि ।

भक्त्या सद्गुरुसेवां कुर्यां

दीक्षामवाप्नुयां शैवीम् ।

विचरंश्च शैवमार्गे

शमयन् कष्टान्यशेषतः स्वानि ॥४॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

स्पष्टमेवैतत् ।

व्यवहारे स्वातन्त्र्यं
लभमानो देशभक्तिमपि कुर्वन् ।
सुखयन् निजञ्च राष्ट्रं
साक्षात्कुर्यां परं स्वरूपं तत् ॥५॥

सुखिनि समृद्ध एव च राष्ट्रे शास्त्राभ्यासो जनैः साफल्येन विधातुं शक्यते, न परतन्त्रे नापीतिदलिते, न चापि दुःशासनपीडित-शोषिते । तस्मादहं राष्ट्रं स्वं सुखयन्नेव पारमार्थिकस्वातन्त्र्यप्राप्ता-वग्रेसरो भवेयम् । तच्च निजस्य परस्वरूपस्य शुद्ध-परिपूर्णाहम्प्रकाश-विमर्श-सामरस्य-मयस्य परमेश्वरात्मनः परिपूर्णसंविद्रूपस्य स्वस्य साक्षा-त्कारेणैवाप्तुं शक्यम् ।

लोकस्य हितं कुर्वन्
परिरक्षन्नार्यशास्त्रमर्यादाः ।
कृतकृत्यतां लभेय स्व-
विलासं सर्वतस्ततः पश्यन् ॥६॥

विज्ञाततत्त्वैरपि शास्त्रमर्यादाः लोकसङ्ग्रहार्थं परिरक्षणीयाः एव । आत्मनः पारमार्थिकस्य पारमैश्वर्यात्मकस्य स्वभावस्य प्रत्यभिज्ञ यैव वास्तविकी पार्यन्तिकी च कृतकृत्यता लभ्यते ।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

एवं यस्य श्रद्धा तस्य
तु विघ्नाः क्रमेण शाम्यन्ति ।
भवति च बुद्धिः स्वच्छा
शिवभक्तिर्गाढतां ततो याति ॥७॥

स्पष्टमेतत् ।

जीवनयात्रा च ततः
सुखमयतामेति तुष्टिरभ्येति ।
भवति च विषयविरक्तिः
परोपकारे च रक्तिरपि तस्य ॥८॥

तीव्रश्च शक्तिपातस्तस्मिन्
सद्यस्ततो ध्रुवं भवति ।
तेनैव याति देहे तिष्ठन्नपि
तूर्णमेव शिवभावम् ॥९॥

तीव्रेणैव शक्तिपातेन सद्यः स्वरूपप्रत्यभिज्ञा, सैव हि जीवन्मुक्तिः ।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

देहान्ते भैरवतां याति
शिवे वा तदाऽद्वयं याति ।
शैवं परमैश्वर्यं शिवम-
यतायां ततश्चिरं भुङ्क्ते ॥१०॥

भैरवता हि क्वचिन्मुक्तशिवता, क्वचित् पुनरधिकारिशिवता । ते हि अधिकारिणो भैरवाः दिव्यशरीराः पारमैश्वर्यांशभागिनो निग्रहानुग्रहौ परमेश्वरेच्छानुसारं कुर्वन्तो विलसन्ति । अधिकारमुपभुज्य शिवे लयं यान्ति । मुक्तशिवा अपि पर्यन्ते शिवीभवन्ति । कोऽपि तीव्रतरानुग्रहपात्रतां यातः साधको देहपातक्षण एव शिवेऽद्वयभावं याति । सैव विदेहा मुक्तिः । सा विदेहमुक्तिरेव परा मुक्तिः । तत इति विदेहमुक्तिलाभे सति । तदा ह्यसौ शिव एवैकरसः ।

तस्माच्छास्त्रं शैवं समुपास्यं
भुक्ति-मुक्ति-फलदायि ।
स्वातन्त्र्यनादमधुरं स्वातन्त्र्य-
व्यञ्जकं सुभक्तानाम् ॥११॥

जीवनस्य द्वे फले प्रयोजनतयाभिसंहिते । ते च भुक्तिमुक्ती । शैवशास्त्रदृष्ट्या उभे अपि ते समुपास्ये एव । तत एवोभयप्राप्त्युपायभूतं शैवशास्त्रम् । स्वातन्त्र्य-सिद्धान्त-गायकत्वेनैतच्छास्त्रमतीव मनोरमम् । अस्य शास्त्रस्याभ्यासेन स्वं स्वातन्त्र्यमभिव्यज्यते साधकस्य सुभक्तजनस्य ।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अब्ध्यग्न्याकाशशरे वर्षे

सप्तर्षिसंज्ञिते नभसि ।

अभिनवकलना शास्त्रे

गीतिशरीरा सुनिर्मिता शैवे ॥१२॥

५०३४ तमे सप्तर्षिसम्वत्सरे, तदनुसारं २०१५ तमे वैक्रमाब्दे । नभसि— श्रावणे मासे । अभिनवा कलना रचना स्वातन्त्र्यदर्पणाख्या । गीतिशरीरा— गीतिच्छन्दोमयी, किञ्च श-इति=५, री इति=२, रा इति च=२ । तेन २२५ संख्याकगीतिपद्यमयी रचना । शैवे= शैवदर्शनविषये ।

चैत्रस्य पूर्णिमायां काले

नीरेऽथ वैक्रमे वर्षे ।

शिखिगीतयोऽत्र योगे

प्रवर्धितास्त्वाह्निके पुनर्दशमे ॥१३॥

"का-ले-नी-रे-इति=२०३१ तमे वैक्रमे वर्षे । अस्मिन् शास्त्रे दशम आह्निके योगविषयमधिकृत्य शिखिसङ्ख्याकाः=२५ इति, शिखी मयूरः तस्य गीतयः, मयूरकेकातुल्यमधुर्याः गीतिछन्दोमय्यः २५ कारिकाः इति । प्रवर्धिताः वेदितव्याः । २०१५ तमे वर्षे केवलं २०० कारिकाः निर्मिताः । २०३१ तमे वर्षे तासां संख्या २२५ यावत् प्रवर्धिता ।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

स्वातन्त्र्य-मात्र-मूर्त्तेः
स्वात्म-शिवस्य प्रसादसुमुखस्य ।
परमं यत्स्वातन्त्र्यं निरूपितं
तन्माक् स्वतन्त्रेण ॥१४॥

मनागेव निरूपितं, नतु विस्तरेण । किञ्च मनाक्-स्वतन्त्रेण न तु पूर्णतया स्वतन्त्रेण नापि सर्वथा परतन्त्रेण ग्रन्थकृता ।

स्वातन्त्र्यप्रतिबिम्बं दर्पण-
कल्पेऽत्र शैवशास्त्रे स्वम् ।
सम्यक् प्रत्यवमृश्य प्राप्नुत
कृतकृत्यतां बुधा नितराम् ॥१५॥

स्पष्टमेवैतत् ।

स्वस्वातन्त्र्यविलासं ज्ञातुं
चेदिच्छथाधिकं सुजनाः ।
पठत तदात्मविलासं श्रीगुरु-
वदनारविन्दतो गलितम् ॥१६॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

श्रीगुरवश्चास्माकं तत्रभवन्तः सर्वतन्त्रस्वतन्त्राः महामहिमानः श्रीमदाचार्यामृतवाग्भवमहोदयाः आत्मविलाससिद्धमहारहस्य-विंशतिकाशा-स्त्रादीनां बहूनां ग्रन्थानां भूयसाञ्च स्तोत्राणां निर्मातारः साक्षात्कृत-तत्त्वा महात्मानः ।

कश्मीरदेशजन्मा शिवशास्त्र-
रुचिर्महेशपादरतिः ।
निरमाद्बलजिन्नाथः शास्त्रं
यत्तेन मोदतां शम्भुः ॥१७॥

स्पष्टार्थमेतत् ।

अत्रकारिकाः=१७ पूर्वाभिःसह=२३१

—इति श्री स्वातन्त्र्यदर्पणे सटिप्पणे
उपसंहाराख्यमाह्निकं
एकादशम् ।

समाप्तमिदं शास्त्रम् ।

कृतिरियं कश्मीरमण्डलान्तःस्थे कुलग्रामे निवासिनः
श्रीमदाप्ताभरामपुत्रस्य, श्रीप्रकाशरामपौत्रस्य
श्रीनीलपण्डितप्रपौत्रस्यविदुषो
बलजिन्नाथपण्डितस्येति
शिवमोम

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

# परिभाषालक्षणकोषः

**अकलाः—** कलोपलक्षितकार्यकरणरहिताः शिवशक्ति-तत्त्व-स्थाः प्रमातारः शाम्भवाः शाक्ताः वा ।

अत्र च तत्त्वेश्वराः—शिव-शक्ति-सदाशिवे-श्वरानन्ताः ब्रह्मेव निवृत्तौ । एषां सामान्यरूपाणां विशेषा अनुगतिविषयाः पञ्च । तद्यथा शाम्भवाः, शाक्ताः, मन्त्रमहेश्वराः, मन्त्रेश्वराः, मन्त्राः इति । (तं. सा. पृ. ७५)

**अघोराः शक्तयः—** मुक्तिमार्गे जीवानां प्रवर्तिकाः शिवस्य शक्तयः ।

पूर्ववज्जन्तुजातस्य शिवधामफलप्रदाः ।
पराः प्रकथितास्तज्ज्ञैरघोराः शिवशक्तयः ॥

(मा.वि.तं—३—३३)

**अघोरेशः—** अनन्तनाथो महामायातत्त्वस्येश्वरो मायादितत्त्व-स्रष्टा ।

अशुद्धं पुनरध्वानमनन्तापरनामाऽऽघोरेशः सृजति (तं. सा. पृ. ७५) ।

तस्मादिति विद्यातत्त्वचक्रवर्तिनोऽनन्तभट्टारकात् ।

(स्व. उ., ८—३३)



CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**अणु:—** संकुचित: प्रमाता जीव: ।

इह ज्ञातृ-कर्तृ-रूपं तावच्चित्तत्त्वस्य स्वरूपम्, तस्यापहारो नामाणवं मलं, येनासावणु: सङ्कुचितो जात:

(ई. प्र. वि. ३—२—४)

**अण्डचतुष्टयम्—** स्वाधारतत्त्वानां व्यापकं बृहत् तत्त्वचतुष्कम् ।

एतदेवाण्डचतुष्टयं पार्थिव-प्राकृतमायीय-शाक्ताभिधम्

(तं. सा. पृ. ११०)

**अनुग्रह:—** परमेश्वरस्य तत्कृत्यं येन जीवा: मुक्तिमार्गं प्रति प्रवर्त्यन्ते ।

एष चानुग्रहलक्षणोऽन्त्य: पञ्चम: पारमेश्वर: कृत्यविशेष: पर-पुरुषार्थप्रापक:, तन्निबन्धनत्वात् परमार्थमोक्षस्य ।

(ई. प्र. वि. १—१—१)

यया यान्ति परां सिद्धिं तद्भावगतमानसा:

(मा. वि. वा. १—६९७)

**अनुत्तर:—** परम: शिव: । यस्मादुत्तरं नास्ति किमपि ।

दुर्विज्ञेया हि सावस्था किमप्येतदनुत्तरम् ।

(तं. आ. २—२८)

विस्तरत: परात्रीशिकाविवरणे पृ. १९ त: ३१ यावद् द्रष्टव्यम् ।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**अनुपायः—** अभ्यासं विनैवैवमेव स्वात्मशिवभावप्रख्याति-प्रकारः ।

उपायजालं न शिवं प्रकाशयेद्
घटेन किं भाति सहस्रदीधितिः ।
विवेचयन्नित्थमुदारदर्शनः
स्वयं प्रकाशं शिवमाविशेत्क्षणात् ।। (तं. सा. पृ.—९)

**अन्तःकरणम्—** मनोबुद्ध्यहङ्काराः ।

तत्र बुद्धिरध्यवसायसामान्यरूपा, ग्राह्यग्राहकाभिमानरूपोऽहङ्कारः, सङ्कल्पादिकारणं मनः, इत्यन्तःकरणं त्रिधा ।

(ई. प्र. वि.३—१—११)

**अपवर्गः—** नैयायिकाभिमतो मोक्षः । उत्पत्ति-विनाश-क्षुत्-पिपासा-शोकमोहात्मकोर्मिपरिमुक्ता दशा ।

अपवर्गस्त्यागमोक्षयोः क्रियावसाने साफल्ये ।

(अ. सं. को. ४—४७)

ननु तस्यामवस्थायां कीदृगात्मावशिष्यते ।
स्वरूपैकप्रतिष्ठानः परित्यक्तोऽखिलैर्गुणैः ।।
ऊर्मिषट्कातिगं रूपं तदस्याहुर्मनीषिणः ।
संसारबन्धनाधीनदुःखक्लेशाद्यदूषितम् ।।

(न्या. मं. १—१—२२)

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अपवेद्या सुषुप्तिः– शून्यतत्त्वे विश्रान्तिः ।

शून्यसौषुप्ते न किञ्चिद् व्यतिरिक्तं वेद्यमिति मायीयमलाभावादपवेद्यं तत् । (ई.प्र.वि. ३–२–१३)

अपानः (१)– शरीरान्तर्गामी निःश्वासः ।

तत्र किञ्चिज्जहती क्वचित् पतन्ती प्रश्वासनिःश्वासरूपा क्रमेण प्राणत्वमपानत्वञ्च विशेषं दर्शयति ।

(ई. प्र. वि. ३–२–१९)

अपानः (२)– सर्वप्रकारकं विषयोपादानम्-जाग्रति स्वप्ने च ।

स्मृत्यादौ वाभ्यन्तरे वेद्ये विश्रान्तेः प्राणापानयोः सुस्पष्टस्मृत्वात् । स्वप्ने......स्वयमेव च वेद्यसंवेदनात् त्यागोपादानरूपा स्थितिः संवेद्यत एव । (तदेव २–२–१९)

अपोहः– अतद्व्यावृत्तिः ।

तदतत्प्रतिभाभाजा मात्रैवातद्व्यपोहनात् ।
तन्निश्चयनमुक्तो हि विकल्पो घट इत्ययम् ॥

(ई. प्र. १ ६–३)

अपोहनशक्तिः– अखण्डे परशिवे वर्तमाना विच्छेदावभासनोन्मुखता ।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

न च विच्छेदनं वस्तुतः सम्भवतीति विच्छेदनस्याभासमात्रमुच्यते। ...... । तदवभासनसामर्थ्यमपोहनशक्तिः।

(ई. प्र. वि. १—३—७)

**आमर्दकः—** द्वैतशैवमठिकायाः प्रवर्तको गुरुः ।

श्रीमच्छ्रीकण्ठनाथाज्ञावशात् सिद्धा अवातरन् ।
त्र्यम्बकामर्दकाभिख्य-श्रीनाथा अद्वये द्वये ।
द्वयाद्वये च निपुणाः क्रमेण शिवशासने ।

(तं. आ. ३६—११,१२)

**अमृतवाग्भवः—** वर्तमानयुगीनोऽद्वैतशास्त्रगुरुः ।

अस्यग्रन्थाः—आत्मविलासः, सिद्धमहारहस्यम्, विंशतिका शास्त्रम्, स्तोत्रादीनि च।

**अशुद्धो विकल्पः—** शरीरादिविषयमात्मत्वज्ञानं, विषयज्ञानं च सविकल्पकमपोहात्मकम् ।

विकल्पबलादेव जन्तवो बद्धमात्मानं मन्यन्ते ।

(तं.आ.पृ. २१)

विविधा कल्पना, विविधत्वेन च शङ्कितस्य कल्पोऽन्यव्यवच्छेदनं विकल्पः। (ई.प्र.वि. १-६-१)

**अशुद्धविद्या—** पशोः सङ्कुचितं ज्ञानसामर्थ्यम् ।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अस्य शून्यादेर्जडस्य विद्या किञ्चिज्ज्ञत्वोन्मीलनरूपा बुद्धि-दर्पणसङ्क्रांतं भावराशिं नीलसुखादिं विविनक्ति ।

(तदेव ६—१—९)

**अहङ्कारः—** देहादावहमिति कर्तृत्वाभिमानः । कृतकः स्वात्मविमर्शः ।

अनात्मनि आत्माभिमानः । शुक्तौ रजताभिमानवत् ।
अत एव "कार" इत्यनेन कृतकत्वमस्योक्तम् ।

(तं.सा.पृ. ८६)

**अहम्—** शुद्धः परिपूर्णश्च संविदात्मकः पारमार्थिकः स्वात्मा । स एव परमः शिवः ।

अहं प्रत्यवमर्शो यः प्रकाशात्मापि वाग्वपुः ।
नासौ विकल्पः......... (ई.प्र. १—६—१) ॥

अस्मद्रूपसमाविष्टः स्वात्मनात्मनिवारणे ।
शिवः करोतु निजया नमः शक्त्या ततात्मने ॥
आत्मैव सर्वभावेषु स्फुरन्निर्वृतिचिद्विभुः ।
अनिरुद्धेच्छाप्रसरः प्रसरद्दृक्क्रियः शिवः ॥

(शि.दृ. १—१, २)

**आणवं मलम्—** चित्तत्त्वस्यात्मनः स्वरूपसङ्कोचावभासः ।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

इह ज्ञातृकर्तृरूपं तावच्चित्तत्त्वस्य स्वरूपम् तस्यापहारो नामाणवं मलम् । (ई.प्र.वि. ३—२—४)

आणवयोगः— स्वरूपाद् बाह्यं तत्त्वमालम्ब्य क्रियमाणो भावनाभ्यासः शैवः क्रियायोगः । क्रियोपायः ।

यदा तूपायान्तरमसौ स्वसंस्कारार्थं विकल्पोऽपेक्षते, तदा बुद्धि-प्राण देह-घटादिकान् परिमितरूपानुपायत्वेन गृह्णन् अणुत्वं प्राप्तः आणवं ज्ञानमाविर्भावयति ।

(तं.सा.पृ.—३५)

आणवोपायः— आणवयोग एव ।

आभासः— प्रकटीभावः

आभासनमेवाभासः ।

आभासवादः— (वेदान्तादौ) यदस्ति विश्वं तदाभासात्मकमेव, न वस्तु-सत्-इति, एवंरूपो वेदान्तवादः ।

वेदान्तिनां विज्ञानशून्यवादिनां चायमाभासः ।
तदनुसारं विश्वमाभासत एव न वस्तुतो विद्यते ॥
स्वप्नमाये यथादृष्टे गन्धर्वनगरं यथा ।
तथा विश्वमिदं दृष्टं वेदान्तेषु विचक्षणैः ॥

(गो.पा.का. २—३१)

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**आभासवादः (शैवानाम्)** यदस्तीति व्यवह्रियते तत् प्रकाशमानं सदाभासात्मकमेव, यन्नास्ति तस्य नास्तित्वमप्याभासात्मकमेवेति, यच्च कथमपि नैवाभासते तन्नास्ति, इति वादः ।

आभासभेदा एव वस्तु, आभासमानतासारत्वाद् वस्तुतायाः ।
(ई.प्र.वि. २—३—५)

एवमप्यवभासानुपवता सत्तोचिता भवेत् ।
तदपेक्षां विना भावाभावयोरविशिष्टता । (अ.प्र.सि.—५)

आत्मप्रकाशसंलग्नमेव सर्वं प्रकाशमानं सदेवास्तीति, प्रकाश एव च तत्तदाकारतयाऽऽभासते इति वादः शैवानाम् ।

**आरम्भवादः—** पूर्वमविद्यमानस्य जगतः परमाणुभ्य उत्पत्तिरिति न्यायवैशेषिकवादः ।

उत्पत्तेः पूर्वमविद्यमानस्य जगतः आरम्भः क्रियते परमात्मना । परमाणुभ्योद्व्यणुकारम्भः, तेभ्यस्त्र्यणुकचतुरणुकादिक्रमेण स्थूलस्य जगतः आरम्भः, इति हि न्यायवैशेषिकमतम् ॥

**आलम्बनम्—** धारणादेर्विषयः ।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**इच्छायोग:—** शाम्भवोपाय: ।

सोपायत्वेऽपीच्छा वा ज्ञानं वा क्रिया वाभ्युपाय: । इति त्रैविध्यं शाम्भव-शाक्ताणवभेदेन समावेशस्य । (तं.सा.पृ ७)

**इच्छोपाय:—** शाम्भवोपाय: ।

दृश्यताम्—इच्छायोग इति ।

**ईश्वरतत्त्वम्—** भेदाभेदभुवि प्रमेयांशस्य प्राधान्येन थनस्यक्षेत्रम् ।

मन्त्रेश्वरादिरूपस्य तु चैतन्यराशे: स्फुटीभूतमस्मद्बहिष्करण-सरणिसम्प्राप्तभाववर्गप्रतिमं विश्वं प्रतिविम्बकल्पतया भाति । तस्य तु तत् तथा प्रथनमीश्वरतत्त्वम् ।

(ई.प्र.वि. ३—१—२)

**ईश्वरभट्टारक:—** ईश्वरतत्त्वे प्रशासनं कुर्वाणो भगवान् ।

अत्र च तत्त्वेश्वरा: (क्रमेण) शिव-शक्ति-सदाशिवेश्वरानन्ता: ।

(तं.सा.पृ. ७४)

**उच्चार:—** प्राणादिवृत्तिपञ्चकात्मक: स्थूल: प्राणनव्यापार: ।

प्राण: स्थूल सूक्ष्मश्च । आद्य उच्चाणरात्मा । उच्चारणं च नाम पञ्च प्राणाद्या वृत्तय: । (तं.सा.पृ. ३५)

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**उच्चारयोगः—** प्राणयोगः शैवः, न पुनः पातञ्जलः प्राणायामाभ्यासः ।

प्राणापानादिवृत्तीरालम्ब्य षडानन्दभूमिकाभिव्यञ्जकः समुत्कृष्टभावनामयो योगो विस्तरेण तन्त्रसारे तन्त्रालोके च द्रष्टव्यः ।

**उच्छलनम्—** चिदानन्दोर्मिसमुल्लासो, यद्वशाद् विश्वस्य प्रतिबिम्बकल्पतया भेदेनावभासनम् । स्पन्दः ।

तस्मात्स्वरूप एव क्रमादिपरिहारेण चमत्कारात्मिका उच्छलत्ता ऊर्मिरिति-मत्स्योदरीति-प्रभृतिशब्दैरागमेषु निर्दिशतः स्पन्द इत्युच्यते । (प. त्री. वि. पृ. २०७)

**उदानः—** विकल्पप्लोषिणी कापि तुर्यदशायां वर्तमाना विकासमायान्ती प्राणवृत्तिः ।

मध्योर्ध्वगाम्युदानाख्यस्तुर्यगो हुतभुङ्मयः ।
विज्ञानाकलमन्त्रेशः । (ई. प्र. ३—२—२०)

**उन्मेषः (१)—** परमेश्वरताया बहिर्मुखा गतिरीश्वरतत्त्वे ।

ईश्वरो बहिरुन्मेष......: (तदेव ३—१—३)
यस्योन्मेषनिमेषाभ्यां जगतः प्रलयोदयौ । (स्पं. का. १)

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**उन्मेषः (२)—** क्षणिकावभासोदयास्तमयभूमिभूतं परं चैतन्यम् ।

एकचिन्ताप्रसक्तस्य यतः स्यादपरोदयः ।
उन्मेषः स तु विज्ञेयः स्वयं तमुपलक्षयेत् ॥ (तदेव ४१)

**उपायः—** स्वरूपसाक्षात्कारजनकोऽभ्यासः । शाम्भव-शाक्ताणव-भेदेन त्रिविधः ।

उपादायापि ये हेयास्तानुपायान्प्रचक्षते ।
(तं. आ. वि. खं ३ पृ.—४६)

तत्रापि स्वातन्त्र्यवशादनुपायमेव स्वात्मानं प्रकाशयति सोपायं वा । सोपायत्वेऽपि इच्छा वा, ज्ञानं वा, क्रिया वाम्युपाय इति त्रैविध्यं शाम्भवशाक्ताणवभेदेन समावेशस्य ।
(तं. सा. पृ.—७)

**कञ्चुकम्—** पारमेश्वरस्वरूपस्वभावयोरावरकं तत्त्वम् ।

यश्च प्रमाता शून्यादिः प्रमेये व्यतिरेकिणि ।
माता स मेयः सन् कालादिकपञ्चकवेष्टितः ॥
(ई. प्र. ३—१—९)

**कञ्चुकषट्कम्—** मायादिनियत्यन्तं तत्त्वषट्कम् ।

तदिदं मायादिषट्कं कञ्चुकषट्कमुच्यते । मायया अपहस्तितत्वेन कलादीनामुपरिपातिनाम कञ्चुकवद् अवस्थानात् ।
(तं. सा. पृ.—८३)

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**करणम् (१)—** ज्ञानक्रियासाधनम् ।

त्रयोविंशतिधा, मेयं यत् कार्यकरणात्मकम् ।

(ई.प्र. ३—१—१०)

**करणम् (२)—** मुद्रादिरूपं शरीरसंस्थानादिकम् ।

करणं तु मुद्रा प्रकाशने वक्ष्यामः । (तं. सा. पृ. ४३)

**करणानि—** ज्ञानक्रियासाधनानि पशोः ।

बाह्यान्तःकरणानि त्रयोदशसंख्याकानि ।

**करणयोगः—** कुण्डलिनीप्रभृतिः शारीरादिर्योगः ।

**कला (१)—** संकुचितं क्रियासामर्थ्यं पशोः ।

किञ्चित्कर्तृत्वोपोद्बलनमयी कार्यमुद्भावयति किञ्चिज्जानामि किञ्चित् करोमीति । (ई. प्र. वि. ३-१-७)

**कलाः (२)—** निवृत्त्याद्यभिधानाः पञ्च आणवोपायविशेषे सूक्ष्मतरबाह्यालम्बनभूताः कतिपयकतिपय— तत्त्वव्यापिन्यः ।

तत्त्वेषु, वर्गशो यदनुगामि रूपं तत् कला । मेयांशगामी स्थूल-सूक्ष्म-पररूपत्वात् (तं. सा पृ. १०९)

त्रिविधो भुवन-तत्त्व-कलात्माध्वभेदः । (तदेव पृ. १११)

**कलाध्वा—** आणवोपाये सूक्ष्मतरं बाह्यावलम्बनम् ।

भुवनेष्वनुगामि किञ्चिद्रूपं तत्त्वम्, तथा तत्त्वेषु वर्गशो यदनुगामि रूपं तत् कला । (तदेव पृ. १०९)

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

कार्ममल:— कर्मकर्तृत्वे सङ्कुचितः स्वस्याभिमानः संसृतेः साक्षात् कारणभूतः पशोर्धर्मः ॥

धर्माधर्मरूपं कार्मं मलं, यतो जन्म भोगश्च। स च नियतावधिक इति जात्यायुर्भोगफलं कर्मेत्युक्तम्।

(ई. प्र. वि. ३—२—५)

इदमपि परमेश्वरेणैव निर्मितम्, यदविचलस्तस्य कुम्भकारपशोः मिथ्या कर्तृत्वाभिमानः।

(तदेव २—४—९)

काल:— प्रमातुः सक्रमत्वकल्पनावभासः, सङ्कोचकं तत्त्वम्।

कालः क्रममासूत्रयन् प्रमातरि विजृम्भमाणस्तदनुसारेण प्रमेयेऽपि प्रसरति, योऽहं कृशोऽभवं स स्थूलो वर्ते भविष्यामि स्थूलतरः इत्येवमात्मानं क्रमवन्तमिव परामृशंस्तत्सहचारिणि प्रमेयेऽपि भूतादिरूप क्रमं प्रकाशयति।

(तदेव ३—१—७)

कालशक्ति:— क्रमावभासनशक्तिः परमेश्वरस्य।

क्रमो भेदाश्रयो भेदोऽप्याभाससदसत्त्वतः।
आभाससदसत्त्वे तु चित्राभासकृतः प्रभोः॥

(तदेव २—१—४)

तदा कालात्मा क्रम उत्तिष्ठति। इति सेयमित्थंभूताऽऽभासवैचित्र्यप्रथनशक्तिर्भगवतः कालशक्तिः।

(तदेव २—१—४)

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

कालो— परशिवस्य सा परा शक्तिर्यंयाऽसौ सर्वासु भूमिकासु विश्वं बिभर्ति प्रकाशयति च ।

चक्रेश्वरस्य स्वातन्त्र्यं पुष्णन्त्यः श्रीकालीशब्दवाच्याः । कलनञ्च गतिः, क्षेपो, ज्ञानं, गणनं, भोगीकरणं, शब्दनं, स्वात्म लयीकरणञ्च । (तं. सा. पृ. ३०)

काल्यो द्वादश—

दृश्यतामग्रे द्वादशकाल्यः इति ।

कृत्यपञ्चकम्— सृष्ट्यादीन्यनुग्रहान्तानि पारमेश्वराणि कृत्यानि ।

सृष्टि-संहार-कर्तारं विलय-स्थिति-कारकम् ।
अनुग्रहकरं देवं प्रणतार्तिविनाशनम् ।। (स्व. तं. १—३)

कैवल्यम्— सांख्यपरिदृष्टं पुरुषस्य परं केवलत्वम् । मोक्षदशा ।

कैवल्यं माध्यस्थ्यं द्रष्टृत्वमकर्तृभावश्च । (सं. का. १७)

केवलस्य भावः कैवल्यम्, प्रकृतिनिर्मुक्तत्वम् ।

क्रियायोगः— आणवोपायः ।

शाक्ताणवयोर्हि ज्ञानक्रियात्मकत्वम् ।

(तं. आ. वि. खं. १ पृ. १८४)

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**क्रियाशक्तिः**— (१) परमेश्वरस्य सर्वाकार योगित्वम ।

(मूलतः)

स्वतन्त्र एक: प्रकाश:......तस्य...... सर्वाकारयोगित्वं क्रिया-
शक्ति: (तं. सा. पृ. ६)

**क्रियाशक्तिः**— (२) स्फुटस्य पारमैश्वर्यस्य निर्वाहिका शक्तिः

(व्यवहारे)

यत्र विश्रान्तिमासाद्य चित्रं क्रीडाविजृम्भितम् ।
क्रियाशक्ति: प्रियात्यन्तं दर्शयेत्तं स्तुम: शिवम् ।
(ई. प्र. वि. २—१—१)

**क्रियाशक्तिः**— (३) ईश्वरतत्त्वावस्था ।

(समभिव्यक्तौ)

बहिर्भावस्य क्रियाशक्तिमयस्य परत्वे उद्रेकाभासे सति
पारमेश्वरं परमेश्वरशब्द वाच्यमीश्वरतत्त्वम् ।
(तदेव ३—१—२)

**क्रियोपाय:**— आणवोपाय: ।

दृश्यताम् क्रियायोग इति ।

**घूर्णः**— स्पन्द: ।

यत्स्वयं निजरसेन घूर्णसे, तत्समुल्लसति भावमण्डलम् ।
(शि. स्तो., १३—१४)

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**घोरतर्यः शक्तयः**— बन्धकशक्तयः ।

विषयेष्वेव संलीनानधोऽधः पातयन्त्यणून् ।
रुद्राणून् याः समालिङ्ग्य घोरतर्योऽपराः स्मृताः ॥

(मा. वि. तं. ३—३१)

**घोराः शक्तयः**— मुक्तिमार्गनिरोधिन्यः शक्तयः ।

मिश्रकर्मफलासक्तिं पूर्ववज्जनयन्ति याः ।
मुक्तिमार्गनिरोधिन्यस्ताः स्युर्घोराः परापराः ॥

(तदेव ३—३२)

**चित्तम्**— सामान्येनान्तःकरणम् ।

अध्यवसायादिव्यापारबुद्ध्यहङ्कार-मनोरूपं चित्तम् ।

(शि. सू. वृ. ३—१)

**चितिः**— प्रकाशरूपस्यात्मनः स्वात्मप्रत्यवमर्शः ।

चितिः प्रत्यवमर्शात्मा परावाक् स्वरसोदिता ।
स्वातन्त्र्यमेतन्मुख्यं तदैश्वर्यं परमात्मनः ॥

(ई. प्र. १—५—१३)

**चित्शक्तिः**— प्रकाशैकसारा परशिवता ।

स्वतन्त्र एकः प्रकाशः । तस्य......प्रकाशरूपता चिच्छक्तिः ॥

(तं. सा. पृ. ६)

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

चिदानन्दः (१) उच्चारे— ध्यानं समालम्ब्याभ्यस्यमानेन योगेन प्राप्या षष्ठी भूमिकाऽऽनन्दस्योच्चारयोगे ।

निरुपाधिर्महाव्याप्तिर्व्यानाख्योपाधिवर्जिता ।
तदा खलु चिदानन्दो यो जडानुपवृंहितः ॥
नह्यत्र संस्थितिः कापि विभक्ता जडरूपिणः ॥

(तं. अ. ५—४९तः ५०)

चिदानन्दः (२) (पारमेश्वरः) चैतन्यस्य स्वरूपभूतोऽनवच्छिन्न आनन्दो येन परमेश्वरः सृष्ट्यादौ प्रवर्तते ।

स्वात्मैव सर्वभावेषु स्फुरन्निर्वृतचिद्विभुः ।
अनिरुद्धेच्छाप्रसरः प्रसरद्दृक्क्रियः शिवः ॥ (शि. दृ. १—२)

जगदानन्दः— अवच्छेदराहित्येन विश्वतः परिस्फुरन् पारमेश्वरः स्वानन्दः । विश्वसिसृक्षाहेतुभूतः शिवस्यानन्दः ।

यत्र कोऽपि व्यवच्छेदो नास्ति यद् विश्वतः स्फुरत् ॥
यदनाहतसंवित्तिपरमामृतवृंहितम् ॥
यत्रास्ति भावनादीनां न मुख्या कापि सङ्गतिः ॥
तदेव जगदानन्दमस्मभ्यं शम्भुरूचिवान् ।
तत्र विश्रान्तिराधेया हृदयोच्चारयोगतः ॥

(तं आ. ५—५०तः ५२)

जपः (शाक्तोपाये)—पुनः पुनः परिशुद्धस्य सत्यस्य विषये विकल्प ज्ञानस्याभ्यासः ।

एवंविधं तत् परं तत्त्वं स्वस्वभावभूतम्, इत्यन्तः परामर्शनं जपः ।

(तं. सा. पृ. २७)

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**जाग्रत् (अवस्था)** बाह्येन्द्रियव्यापारोचितावस्था ।

सर्वाक्षगोचरत्वेन या तु बाह्यतया स्फुटा ।
सृष्टिः साधारणी सर्वप्रमातॄणां स जागरः ॥

(ई. प्र. ३—२—१७)

**जीवन्मुक्तः—** शरीरे तिष्ठन्नपि तत्त्वादविचलन्प्राणी ।
व्यवहारे वर्तमानोऽपि परमार्थं पश्यन् ज्ञानी ।

तदेवं व्यपोहिते व्यामोहे, स्थितेऽपि तत्संस्कारमात्रविधृते शरीरादौ अनात्मताभिमानपुरःसर एवात्मताभिमाने, घटादौ च प्रकाशमान एवानात्मताभिमाने, ज्ञातेन्द्रजालतत्त्वस्य पश्यतोऽपीन्द्रजालं यथा न तत्त्वतो व्यामोहस्तथा प्रत्यभिज्ञातस्वरूपस्य ।

(ई. प्र. वि. २—३—१७)

**जीवन्मुक्तिः—** जीवदशायामेव शिवतावभासः ।

इति वा यस्य संवित्तिः क्रीडात्वेनाखिलं जगत् ।
स पश्यन् सततं युक्तो जीवन्मुक्तो न संशयः ॥ (स्पं. का. ३०)

**ज्ञानयोगः—** शाक्तोपायः शुद्धविकल्पज्ञानाभ्यासः ।

विकल्पबलादेव जन्तवो बद्धमात्मानमभिमन्यन्ते ; सोऽभिमानः संसारप्रतिबन्धहेतुः । अतः प्रतिद्वन्द्विरूपो विकल्प उदितः संसारहेतुं विकल्पं दलयति । (तं. सा. पृ. —२१)

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**ज्ञानशक्तिः (१)**—परमेश्वरस्यामर्शात्मकतां ज्ञापयन्ती शक्तिः। तस्य......

**(मूलत)** आमर्शात्मकता ज्ञानशक्तिः (तं. सा. पृ. ६)

ज्ञापयन्ती जगत्यत्र ज्ञानशक्तिर्निगद्यते (मा.वि.तं. ३—७)

**ज्ञानशक्तिः (२)**—सदाशिवावस्था।

**(विकासेतत्त्वरूपा)**

अथास्माकं ज्ञानशक्तिर्या सदाशिवरूपता। (शि.दृ. २—१)

**ज्ञानशक्तिः (३)**—विचित्रतया ज्ञातृज्ञेयावभासिका शक्तिः शिवस्य।

**(लोकव्यवहारे)** स्वरूपान्तर्बुडितमर्थराशिमपरमपि भिन्नाकारमात्मनि परिगृह्य कञ्चिदेवार्थं स्वरूपादुन्मग्नमाभासयति इत्यापतितम्। सैषा ज्ञानशक्तिः। (ई.प्र.वि. १—३—७)

**ज्ञानोपायः**— शाक्तोपायः।

सोपायत्वे ऽपीच्छा वा ज्ञानं वा क्रिया वाभ्युपाय इति त्रैविध्यं शाम्भवशाक्ताणवभेदेन समावेशस्य। (तं. सा. पृ. ७)

**झगिति**— क्षणदृष्टनष्टं यथास्यात्तथा प्रकाशनम्।

सचाकचक्यं साश्चर्यं सचमत्कारं च प्रकाशमानत्वं प्रारम्भिकस्य शुद्धस्वात्मसाक्षात्कारस्य।

**तत्त्वाध्वा**— षट्त्रिंशत्तत्त्वात्मकं बाह्यमालम्बनमाणवोपाये।

मेयांशगामी स्थूल-सूक्ष्म-पररूपत्वात् त्रिविधो भुवनतत्त्वकलात्मा-ध्वभेदः (तं.सा—पृ. १११)

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**तमो (गुणः)**— मोहवत्ता पुरुषस्य मोहात्मकता च प्रकृतेः । नियमनशीलो गुणः ।

इति पशोः प्रकाशः प्रकाशाव प्रकाशश्चेति क्रमेण सुखदुःखमोह-लक्षणानि प्रकाश-क्रिया-नियमन-शीलानि सत्त्वरजस्तमांसि ।

(ई. प्र. वि. ४—१—४)

**तमोगुणो (मूलतः)**—सङ्कोचमाप्ता प्रभोर्माया शक्तिः ।

स्वाङ्गरूपेषु भावेषु पत्युर्ज्ञानं क्रिया च या ।
मायातृतीये ते एव पशोः सत्त्वं रजस्तमः ।। (ई. प्र. ४—१—४)

**तमोगुणः— (स्वभावतः)** प्रकाशाभावात्मकमोहरूपः । सुखात्मकताया एकघनोऽभावः ।

तमस्त्वप्रकाशरूपो मध्ये विश्रमः प्रलयस्थानीयः ।

(ई. प्र. वि. ४—१—३)

प्रियपुत्रादेरेकघन एव प्रकाशः सुखम्, एक घन एवप्रकाशो मोहः ...... पशोः सा सत्ता सत्त्वम्, तदभावस्तमो, द्वयात्मा रजश्च ।

(तदेव ४—१—६)

**तुरीया दशा**— शुद्धज्ञानात्मिका दशा परप्रमातृभावप्रख्यातिरूपा । तुर्या दशा ।

यदापि परामृष्टतथाभूतवैभवादिनित्यैश्वर्यसम्भेदेनैवाहम्भावेन शून्यादिदेहधात्वन्तं सिद्धरसयोगेन विध्यते, तदास्यां तुर्यदशायां तदपि प्रमेयतामुज्झतीव ।

(तदेव ३—२—१२)

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**तुर्या दशा—** तुरीयैव । स्वैश्वर्यचमत्कारानुभूतिमयी दशा । जाग्रदाद्याधारभूताऽनुस्यूता चेतनात्मिका दशा ।

त्रितयस्यानुसन्धिस्तु यद्वशादुपजायते ।
स्रक्सूत्रतुल्यं तत्तुर्यं सर्वभेदेषु गृह्यताम् । (मा. वि. वा. १—१००६)

जाग्रत्यां वा स्वप्नजायां दशायां
सौषुप्त्यां वा या चिदाभाति तुर्या । (शि. जी. द. ४)

**तुर्यातीतं पदम्—** परशिवत्वमेव ।

यत्त्वद्वैतभरोल्लासि द्रावितारोषभेदकम् ।
तुर्यातीतं तु तत् प्राहुः ......... (मा. वि. वा. १—१००७)

**तुर्यातीता दशा—** परादपि परस्यात्मतत्त्वस्य साक्षात्कारस्यावस्था ।

यदा तूक्तगुरूपदेशादिदिशा तेनैवाहम्भावेन स्वातन्त्र्यात्मना व्यापकत्वनित्यत्वादिधर्मपरामर्शमात्मनि विदधता ततः शून्यादेः प्रमेयादुन्मज्ज्यैवास्यते तदा तुर्यातीतावस्था ।

(ई. प्र. वि. ३-२-१२)

जाग्रत्यां वा स्वप्नजायां दशायां
सौषुप्त्यां वा या चिदाभाति तुर्या ।
तामप्येतां तिष्ठतेऽस्मा अतीत्य
सर्वस्मै मे सर्वभासे नमोऽस्तु ॥

(शि. जी. द. ४)

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

त्रिकम् (अपरम्)—शिवशक्तिनरात्मकम् ।

'नरशक्तिशिवात्मकं त्रिकं,
हृदये या विनिधाय भासयेत् ।
प्रणमामि परामनुत्तरां,
निजभासां प्रतिभाचमत्कृतिम् ।।

(प. श्री. वि. पृ. २)

त्रिकम् (परम्) — शिवशक्तिसामरस्यस्वरूपः परमः शिवः ।

तदेवमत्र विसर्गप्रसरस्वभावत्वेन जगद्वैचित्र्यबीजभूतं शिवशक्तिसंघट्टात्मकपरत्रिकशब्दवाच्यम् । (त. आ. वि. खं १, पृ.७)

त्रिकम् (परापरम्)—इच्छाज्ञानक्रियात्मक शक्तित्रिकम् ।

परापरमपि (त्रिकम्) पराप्रष्टुमुपक्रममाणः प्रथमं परादेवीं (इच्छात्मिकां) परामृशति...... तावदपरां देवीं (क्रियात्मिकाम्) अभिमुखयति ।...... परापरां देवीं (ज्ञानात्मिकां) परामृशति ।

(तदेव खं १, पृ. १६ तः १९)

त्रिकम् (पाशुपतानाम्)—पतिः, पशुः, पाशश्च ।

शैवागमेषु मुख्यं, पशुपतिपाशा इति क्रमात् त्रितयम् ।
तत्र पतिः शिव उक्तः, पशवो ह्यणवोऽर्थपञ्चकं पाशः ।।

(स. द.स. पृ.—७२)

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**त्रिकदर्शनम्**— त्रिकागमोक्तसाधनप्रक्रियानुसारि सिद्धान्तजातम्।
वर्णितमेतत् तन्त्रसारे संक्षेपतः तन्त्रालोके विस्तरतश्च द्रष्टव्यम्।

**त्रिकप्रक्रिया**— उपायत्रयात्मिका।
त्रिकागमेषूपदिष्टं शाम्भवाद्युपायजातम्।

**त्रिकागमाः**— सिद्धा-मालिनी-नामकाख्यमागमत्रयम्, तदनुसारि च स्वच्छन्दाद्यागमकदम्बकम्।
तच्च सिद्धा-नामक-मालिन्याख्यखण्ड-त्रयात्मकत्वात् त्रिविधम्।
(तं.आ.वि. १—१८)
अत्र तृतीय आगमो 'वामक'नामा भवेत्। लेखकप्रमादतो 'नामक' इति मुद्रितेषु पुस्तकेषु दृश्यते।

**त्रिकाचारः**— त्रिकागमोपदिष्टः साधनाभ्यासक्रमः सर्वोत्कृष्टः साधनक्रमः।
वेदाच्छैवं ततो वामं ततो दक्षं ततः कुलम्।
ततो मतं ततश्चापि त्रिकं सर्वोत्तमं परम्॥
(प.त्री.वि.पृ ९२)

**त्र्यम्बकः (१मः)**—दुर्वाससो मानसः पुत्रः। अद्वैत शैव मठिकाप्रवर्तको गुरुः।
ततः स भगवान् देवादादेशं प्राप्य यत्नवान्।
ससर्ज मानस पुत्रं त्र्यम्बकादित्यनामकम्॥
तस्मिन् संक्रमयामास रहस्यानि समन्ततः॥
(शि. दृ. ७—११२)

**त्र्यम्बकादित्यः**— त्र्यम्बक एव।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

त्र्यम्बकादित्याः (अपरे — 'प्रथमत्र्यम्बकस्य सन्ततिक्रमे पञ्चदश गुरवः ।

सिद्धस्तद्वत् सुतोत्पया सिद्धा एव चतुर्दश ।
यावत् पञ्चदशः पुत्रः सर्वशास्त्रविशारदः ॥
(शि. दृ. ७—११३ ११४)

त्र्यम्बकमठिका— अद्वैतशैवमठिका ।

एवमेषां त्र्यम्बकाख्या तेरम्बा देशभाषया ।
स्थिता शिष्यप्रशिष्याद्यैर्विस्तीर्णा मठिकोदिता ।
(तदेव ७—१२१, १२२)

त्र्यम्बकवंशः— त्र्यम्बकादित्यस्य वंशः ।

श्री त्रैयम्बकसद्वंशमध्यमुक्तामयस्थितेः ।
श्रीसोमानन्द- नाथस्य...... (ई. प्र. वि. आरम्भे)

दीक्षा— शैवशास्त्रोपदेशोऽनुग्रहपरस्य गुरोः ।

दीयते ज्ञानसद्भावः क्षीयन्ते पशुवासनाः ।
दानक्षपणसंयुक्ता दीक्षा तेनेह कीर्तिता ॥
(तं. आ. वि. खं, पृ. ८०)

दुर्वासाः— अद्वैतशैवदर्शनोपदेष्टा । श्रीकण्ठनाथशिष्यः । त्र्यम्बकादित्यगुरुः ।

कैलासाद्रौ भ्रमन् देवो मूर्त्या श्रीकण्ठरूपया ।
अनुग्रहायावतीर्णश्चोदयामास भूतले ॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

मुनिं दुर्वाससं नाम भगवानूर्ध्वरेतसम् ।
नोच्छिद्येत यथा शास्त्रं रहस्यं कुरु तादृशम् ।।

(शि. दृ. ७—१०९—११०)

**दृक्—** प्रकाशः, बोधः ।

दृक् स्वाभासैव नान्येन वेद्या..... (ई. प्र. १—३—२)

**देहप्रमाता—** स्थूलं देहमेवात्मेत्यभिमन्वानो जीवः ।

चित्तत्त्वं मायया हित्वा भिन्न एवावभाति यः ।
देहे बुद्धावथ प्राणे कल्पिते नभसीव वा ।।
प्रमातृत्वेनाहमिति...... (ई. प्र. १...६—४, ५)

**देशाध्वा—** स्थानकल्पनायोगे धारणालम्बनतया गृहीतं मूर्तिवैचित्र्यं कला-तत्त्व-भुवनात्मकम् ।

मूर्तिवैचित्र्याभासनशक्तिजो देशाध्वा संविदि विश्रान्तः, तद्द्वारेण शून्ये, बुद्धौ, प्राणे, नाडीचक्रानु-चक्रेषु, बहिः शरीरे, यावल्लिङ्गस्थण्डिलप्रतिमादौ समस्तोऽध्वा परिनिष्ठितः ।
(तं. सा. पृ. ४७)

**द्वादशकाल्यः—** अभेद-भेदाभेद-भेद-परिपूर्णता-भूमिकासु सृष्ट्यादिकृत्य निर्वाहिकाः परमेश्वरस्य विशिष्टाः शक्तयः ।

ययेदं शिवादिधरण्यन्तमविकल्प्यसंविन्मात्ररूपतया बिभर्ति च पश्यति च भासयति च परमेश्वरः साऽस्य श्रीपराशक्तिः । यया

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

च दर्पणहस्त्यादिवद् भेदाभेदाभ्यां साऽस्य श्रीपरापराशक्तिः। यया परस्परभेदेनैव साऽस्य श्रीमदपरा शक्तिः। एतत् त्रिविधं यया धारणमात्मन्येव क्रोडीकारेणानुसन्धानात्मना ग्रसते सास्य भगवती श्रीपरैव श्रीमन्मातृसद्भाव-कालकर्षिण्यादि-शब्दान्तरनिरुक्ता। ता एताश्चतस्रः शक्तयः स्वातन्त्र्यात् प्रत्येकं त्रिधैव वर्तन्ते सृष्टौ, स्थितौ संहारे चेति द्वादश भवन्ति।

(तं. सा. पृ—२९)

**द्वैतम्—** प्रमातृ प्रमेययोः परस्परं भेदः इति मतम्।

न्याय-वैशेपिक-सांख्य माध्व-शैवसिद्धान्तादीनि शास्त्राणि द्वैतवादप्रधानानि। पाशुपता आमर्दकीयाश्च शैवा अपि द्वैतिन एव।

**द्वैताद्वैतम्—** प्रमातृ प्रमेययोः परस्परं भेदेऽप्यभेद एवेति मतम्।

रामानुजीयाः, द्वैताद्वैतवादिनः। तथा च श्रीनाथीयाः शैवाः वीरशैवाश्च।

**ध्यानम् (१)—** चित्तेन वस्तुनः सततस्मरणम्।

**ध्यानम् (आणवे)—** आणवोपाये बुद्धिमालम्ब्य क्रियमाणो योगाभ्यासः।

यदेतत्स्वप्रकाशं सर्वतत्त्वान्तर्भूतं परं तत्त्वमुक्त, तदेव निज-हृदयबोधे ध्यात्वा तत्र प्रमातृप्रमाणप्रमेयरूपस्य.. ... संघट्टं ध्यायेद् यावदसौ भैरवाग्निर्ध्यानसमिद्धाकारः सम्पद्यते.. ... ततोऽनुत्तरतामापादितं ध्यायेत्। (तं. सा. पृ. ३६)

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**ध्यानयोगः (शाम्भवे)**—परे तत्त्वे बुद्धेरवस्थापनस्याभ्यासः ।

ध्यानं या निश्चला बुद्धिर्निराकारा निराश्रया ।
न तु ध्यानं शरीराक्षिमुखहस्तादिकल्पना ॥ (वि. भै. १४६)

**ध्यानयोगः (विशेषतः)** बुद्धिव्यापारस्याङ्गभूतं मातृ-मेय-मान-रूपं त्रिकोणं संघट्टरूपतयैकीकृत्य तत्र पारमेश्वरस्वभावभावनाभ्यासेन साध्यमानो योगः ।

स्वप्रकाशं समस्तात्मतत्त्वं मात्रादिकं त्रयम् ।
अन्तःकृत्य स्थितं ध्यायेद् हृदयानन्दधामनि ॥
तद्द्वादशमहाशक्तिरश्मिचक्रेश्वरं विभुम् ।
व्योमभिर्निःसरद्बाह्ये ध्यायेत् सृष्ट्यादिभावकम् ॥
तदग्रस्तं सर्वबाह्यान्तर्भावमण्डलमात्मनि ।
विश्राम्यन् भावयेद् योगी स्यादेवं स्वात्मनः प्रथा ॥
(तं. सा. पृ. ३७)

**ध्वनिः**— वर्ण इति प्रसिद्ध आणवोपाये आलम्बनत्वेन ।
अव्यक्तः प्राणोच्चारस्य ध्वनिः ।

अस्मिन्नेवोच्चारे स्फुरन्नव्यक्तानुकृतिप्रायो ध्वनिर्वर्णः । तस्य सृष्टि-संहार-बीजे मुख्यं रूपम् । तदभ्यासात् परसंवित्तिलाभः ।
(तं. सा. पृ. ४२)

**ध्वनियोगः**— आणवोपायेऽभ्यासविशेषः ।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

प्राणोच्चारध्वनौ धारणाभ्यासः सृष्टिसंहारादिबीज-मन्त्र-भावनापूर्वकः । (तं. सा. पृ. ४२)

नर— मायाप्रमाता, मायीयं च जगत्, जडं तत्त्वम् ।

तत्र यत् केवलं स्वात्मन्यवस्थितं, तत् केवलं जडरूपयोगि मुख्यतया नरात्मकम् । (प. त्री. वि. पृ. ७४)

नादः (अपरः)— अनाहतो ध्वनिः ।

योऽसौ नादात्मकः शब्दः सर्वप्राणिष्ववस्थितः ।
अधऊर्ध्वविभागेन निष्क्रियेणावतिष्ठते ।।
(तं आ. ३—११३, ११४)

नादः (तन्त्रे)— विमर्शात्मिका शक्तिः शिवस्य ।

नदति—स्वात्माभेदेन विश्वं परामृशति इति नादः ।
(शि.सू.वि. पृ. ९७)

नादः (परः)— अहमिति विमर्शः परशिवस्य ।

चितिः प्रत्यवमर्शात्मा परावाक् स्वरसोदिता ।
स्वातन्त्र्यमेतन्मुख्यं तदैश्वर्यं परमात्मनः ।।
(ई. प्र. १—५—१३)

नादः (व्यवहारे)—शाब्दो व्यवहारः ।

वस्तुनाम्नां वाचकपदानां वा प्रपञ्चः ।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**निग्रह:—** पिधानकृत्यम्, विलयकृत्यम् ।

हृदि ते न तु विद्यते ऽन्यदन्यद् वचने कर्मणि चान्यदेव शम्भो ।
परमार्थसतोऽप्यनुग्रहो ।। यदि वा निग्रह एक एव कार्यः ।।

(शि. स्तो. ११—७)

सदसदनुग्रहनिग्रहगृहीतमुनिविग्रहो भगवान् ।
सर्वासामुपनिषदां दुर्वासा: जयति दैशिक: प्रथम: । (त्रि.म.स्तो ५६)

**निजानन्द:—** पुरुषतत्त्वरूपे आत्मनि विश्रान्त्या लभ्या प्रथमा भूमिकाऽऽनन्दस्योच्चारयोगे ।

निजानन्दे प्रमात्रंशमात्रे हृदि पुरा स्थिति: ।

(तं· आ, ५—४४)

निजानन्द: प्रमात्रंश मात्रनिष्ठानिबन्धन: ।

(मा. वि, वा. २—३५)

**निमेष:—** अन्तर्मुख: स्पन्द: शिवस्य, सदाशिवदशा ।

ईश्वरो बहिरुन्मेषो निमेषोऽन्त: सदाशिव:

(ई. प्र. ३—१—३)

**निरानन्द:—** शून्यतायां विश्रान्त्या लभ्या द्वितीया भूमिरानन्दस्योच्चारयोगे ।

शून्यतामात्रविश्रान्तेर्निरानन्दं विभावयेत् । (तं. आ. ५—४४)

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**नियतिः—** असौ प्राकृतिको नियमो येन जीवस्य विद्याकलारागाः नियम्यन्ते पदे पदे।

अत्रैव कस्मादभिव्यङ्क्ष्वङ्क्षः इत्ययमर्थो नियत्या नियम्यते।
(ई. प्र. वि ३—१—९)

अस्मिन्नेव कर्तृत्वमित्यत्रार्थे नियतेर्व्यापारः। कार्यकारण-भावेऽपि अस्या एव व्यापारः। (तं. सा. पृ ८२)

**निर्वाणम् (बौद्धमते) (१)—** शून्यताप्राया दशा।

एवं कृती निर्वृतिमभ्युपेतो नैवावनिं गच्छति नान्तरिक्षम्। दिशां न काञ्चिद् विदिशं न काञ्चित् क्लेशक्षयात् केवलमेति शान्तिम्। (सौ.नं. १६—२९)

**निर्वाणम् (सामान्यतः) (२)—** सामान्येन मोक्षः।

एवं यो वेत्ति तत्त्वेन तस्य निर्वाणगामिनी।
दीक्षा भवत्यसंदिग्धा तिलाज्याहुतिवर्जिता॥
(प.त्री. २५)

**निर्विकल्पम्—** नामरूपकल्पनाशून्यं शुद्धसंविदात्मकं ज्ञानम्।

अहंप्रत्यवमर्शो यः प्रकाशात्मापि वाग्वपुः।
नासौ विकल्पः स ह्युक्तो द्वयाक्षेपी विनिश्चयः॥
(ई.प्र. १—६—१)

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

निर्वृतिशक्तिः— आनन्दशक्तिः स्वभावभूना शिवस्य ।

आत्मैव सर्वभावेषु स्फुरन्निर्वृतचिद् विभुः ।

अनिरुद्धेच्छा प्रसरः प्रसरद्दृक्क्रियः शिवः ॥

(शि.दृ. १—२)

निर्वृता वेद्यनिराकांक्षा पूर्णाचिद्यस्य । (शि.दृ वृ. १—२)

निवृत्तिः (कला(— पृथ्वीतत्त्वव्यापिनी कला ।

पृथिव्यां निवृत्तिः । निवर्तते यतस्तत्त्वसर्गः ।

(त.सा पृ. १०९)

पञ्चकृत्यानि— सृष्ट्यादीनि पारमेश्वराणि कृत्यानि ।

पञ्चविधकृत्यतत्परभगवद्भैरवभट्टारकस्य........... ।

दृश्यताम्-कृत्य पञ्चकमिति । (प.त्री.वि.पृ. १६)

पतिः— मुक्तो दिव्यदेहः प्रमाता । अभेदे भेदाभेदेवावस्थितः प्रमाता ।

स्वाङ्गरूपेषु भावेषु प्रमाता कथ्यते पतिः । (ई.प्र. ३—२—३)

पदाध्वा— षडध्वधारणाप्रकारविशेषः । कालाध्वनि सूक्ष्मोऽध्वा ।

तत्र वर्णमन्त्रपदाध्वनः कालाध्वनि स्थितिः । परसूक्ष्मस्थूल-रूपत्वात् । (तं.सा.पृ. ४७)

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**परमशिव :—** अनुत्तरं सप्तत्रिंशं परं तत्त्वम् ।

दृश्यताम्—अनुत्तर इति ।

**परानन्दः—** प्राणापानाववलम्ब्यानुभाव्या तृतीया भूमिकाऽऽनन्दस्योच्चारयोगे ।

प्राणोदये प्रमेये तु परानन्दं विभावयेत् ।
तत्रानन्तप्रमेयांशपूरणापाननिर्वृतः ॥
परानन्दगतस्तिष्ठेद् अपानशशिशोभितः ।

(तं० आ० ५—४५, ४६)

**परावाक्—** स्वात्मचमत्कारलक्षणः पूर्णः स्वात्मप्रत्यवमर्शः ।

चितिः प्रत्यवमर्शात्मा परावाक् स्वरसोदिता ।
स्वातन्त्र्यमेतन्मुख्यं तदैश्वर्यं परमात्मनः ।

(ई० प्र० १—५-१३)

**परिणामवाद—** सांख्यादीनां सिद्धान्तः। मूलतत्त्वं जगदाकारतया परिणमतीति वादः ।

मूलप्रकृतिः भगवान् वा वासुदेवः, शिवो वा भगवान् जगद्रूपतायां परिवर्तितो भवतीत्येवं प्रकारकाः सांख्य-वैष्णव-श्रीकण्ठमतादिसिद्धान्तः ।

**पशुः—** बद्धो मायाप्रमाता । जीवः । अणुः । पुरुषः ।

स्वाङ्गरूपेषु भावेषु प्रमाता कथ्यते पतिः ।
मायातो भेदिषु क्लेशकर्मादिकलुशः पशुः । (ई० प्र० ३/२/३)

**पश्यन्तीवाक्—** विद्यादशोचिताऽक्रमा विमर्शात्मिका भेदाभेदप्रधाना वाणी ।

अथास्माकं ज्ञानशक्तिर्या सदाशिवरूपता ।
वैयाकरणसाधूनां पश्यन्ती सा परा स्थितिः ॥ (शि० दृ० २—१)

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अविभागा तु पश्यन्ती सर्वतः संहृतक्रमा ।
स्वरूपज्योतिरेवान्तः सूक्ष्मा वागनपायिनी ॥

(पा० गी०, म० भा०, व० पर्व)

**पिधानकृत्यम्** स्वरूपगोपनकृत्यम्, निग्रहकृत्यम् ।

परमेश्वरः स्वं परमेश्वरत्वं निगूहमान एव जीवरूपतया प्रकाशते । जीवांश्च पिधानेनैवाधः क्षिपति मायायाम् । इत्येतत्तस्य पिधानकृत्यम् ।

**पुंस्तत्त्वम्**— मायाप्रमाता ।

मायापरिग्रहवशाद् बोधो मलिनः पुमान् पशुर्भवति । (प० सा० १६)

**पुरुषः**— मायाप्रमाता । जीवः ।

पुंस्तत्त्वमित्येव ।

**पुर्यष्टकम् (१)** तन्मात्राण्यन्तः करणानि च ।

तन्मात्रोदयरूपेण मनोऽहम्बुद्धिवर्तिना ।
पुर्यष्टकेन संरुद्ध......　　(स्पं० का० ४९)

**पुर्यष्टकम् (२)** प्राणपञ्चकं करणवर्गत्रयञ्च ।

प्राणश्च पुर्यष्टकशब्दवाच्यः, प्राणादिपञ्चकं, बुद्धीन्द्रियवर्गः, कर्मेन्द्रियगणो, निश्चयात्मिका धीर्यतो व्यज्यते ।

(ई० प्र० वि० ३-२-१३)

**प्रकाशः**— चैतन्यस्य स्वभावभूतः सन्ततः स्वाभासः ।

यः प्रकाशः स एवायं प्रतिभाति तथा तथा ।
नैव चान्यस्य कस्यापि स तु भात्येव केवलम् ॥

(मा० वि० वा० १—८३)

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**प्रकृतिः**.— गुण साम्यात्मकं सामान्यं ज्ञेयतत्त्वं पुरुषस्य ।

विशेषणभागों यः किञ्चिदित्युक्तो ज्ञेयः कार्यश्च तं यावत् सा कला स्वात्मनः पृथक् कुरुते तावदेष एव सुखदुःखमोहात्मकभोग्य-विशेषानुस्यूतस्य सामान्यमात्रस्य तद्गुणसामान्यापरनाम्नः प्रकृति-तत्त्वस्य सर्गः । (तं० सा० पृ० ८३)

**प्रतिबिम्बवादः (शैवः)** :—सकलं विश्वं तावच्छिवस्य शक्तीनां प्रतिबिम्बमात्र-मिति सिद्धान्तः शैवः ।

अन्तर्विभाति सकलं जगदात्मनीह
यद्वद्विचित्ररचना मुकुरान्तराले ।
बोधः परं निजविमर्शरसानुवृत्त्या
विश्वं परामृशति नो मुकुरस्तथा तु ॥ (तदेव पृ० १९)

**प्रत्यभिज्ञा**— विस्मृतस्य स्वरूपस्य पुनः साक्षात्कारेण स्मरणम् ।

प्रतीपम् आत्माभिमुख्येन ज्ञानं प्रकाशः प्रत्यभिज्ञा, भातभासमान-रूपानुसन्धानात्मिका..... प्रतिसन्धानेनाभिमुखीभूते वस्तुनि ज्ञानम् । (ई० प्र० वि०—१—१—१)

प्रत्यक्षसाक्षात्कारस्मृतिज्ञानयोः परस्परं सम्मिश्रणेन "सोऽयं देवदत्तः" इतिवत्—प्रत्यभिज्ञात्मकं ज्ञानम् भवति स एवाहं परमः शिव इति ।

**प्रत्यवमर्शः**— भातभासमानतात्मकं प्रतीपं स्वात्माभिमुखमवमर्शनम् ।

चिति :—चितिक्रिया, तस्याः प्रत्यवमर्शः – स्वात्मचमत्कारलक्षणः आत्मा-स्वभावः । (ई० प्र० वि० १—५ –१३)

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**प्रधानम्**— मूलप्रकृति: । कार्यकरणतत्त्वानां मूलभूतं सामान्यं स्वरूपम् ।

त्रयोविंशतिधा मेयं यत् कार्यकरणात्मकम् ।
तस्याविभागरूप्येकं प्रधानं मूलकारणम् ।
(ई० प्र० ३—१—१०)

**प्रमाता** — प्रमितौ सर्वथापि स्वतन्त्रः, आभासानां संयोजनवियोजनादौ च ।

सर्वसंविन्नदीभेदाभिन्नविश्रामभूमये ।
नमः प्रमातृवपुषे शिवचैतन्यसिन्धवे ॥ (भावोपहारटीका)

**प्रलयकेवली** — प्रलयाकलः प्रमाता ।

प्रलयेन सौषुप्तपदविश्रान्त्या केवलत्वभाक् ।

**प्रलयाकलः** —प्राणे, बुद्धौ, शून्ये वा विश्रान्तः प्रमाता । प्रलयेनाकलः प्रलयान्तं चाकलः, प्रलयकेवली । प्रलयोऽत्र सुषुप्तौ कार्यकरणलयः ।

शून्ये जडत्वादबोधरूपे एव, यदि वा प्राणे, बुद्धौ वा येषां—अहमिति चमत्कारयोगात् कर्तृत्वं, ते प्रलयेन कृता अकलाः, कलातत्त्वोपलक्षितकार्यकरणरहिता अबोधरूपाः कर्तारश्च । प्रलयावधि हि ते तथा कृताः उत्तरकालं तु कार्यकरणसम्बद्धा एव भवन्ति ।
(ई० प्र० वि० ३—२—८)

**प्राणः (सामान्यरूपः)**—जीवनशक्तिः । देहादौ चैतन्याधायिनी शक्तिः ।

प्राण इति प्राणनरूपा जीवनस्वभावा येयं चिद्रूपस्य स्थितिः, सा तावत् सामान्यपरिस्पन्दरूपा, देहप्राणदेरचेतनस्य चेतनायमानतासम्पादनात्मिका । (तदेव ३—२—१८)

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

प्राणः (प्रश्वासरूपः) —प्रश्वासः, हृदयाद् बाह्यद्वादशान्तं यावत् प्रचलन् प्राणवायुः ।

ऊर्ध्वे प्राणो ह्यधो जीवो विसर्गात्मा परोच्चरेत् ।
उत्पत्तिद्वितयस्थाने भरणाद् भरिता स्थितिः ॥ (वि० भै० २४)

प्राणापानौ — (विशेषरूपौ) सर्वप्रकारौ हानोपादानव्यवहारौ जाग्रति स्वप्ने च प्रवर्तमानौ ।

तत्र किञ्चिज्जहती क्वचित् पतन्ती च प्रश्वासनिःश्वासरूपा क्रमेण प्राणत्वमपानत्वञ्च विशेषं दर्शयति । तदिदं विशेषद्वयं जाग्रति तावत् स्फुटमेव ।......स्वप्नेऽपि तद् द्वयमस्त्येव......। स्वयमेव च वेद्यसंवेदनात् त्यागोपादानरुपा स्थितिः संवेद्यत एव ।

(ई० प्र० वि० ३—२—१९)

प्राणप्रमाता — प्राणमेवात्मानमभिमन्वानः प्रलयाकलः । स एव प्राण-प्रलयाकलः ।

यदि वेन्द्रियशक्तीनामेव यान्तरी साधारणप्राणनात्मिका प्राण-शब्दवाच्या प्राणादिमारुतविशेषप्रेरणामयी, सैवाहमित्यधिशयाना जीवनम्, तदा प्राण एव जीवः संसारी ।

(तदेव ३—२—१३)

प्राणयोगः (१) प्राणोच्चारे प्राणापानादिपंचविधं प्राणनव्यापारमालम्बनीकृत्य निजानन्दादिसप्तकाभिव्यञ्जकः आणवयोगविशेषः ।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

एवं शून्यात्प्रभृति व्यानान्तं या एता विश्रान्तयः, ता एव निजानन्दो (पुरुषतत्वे), निरानन्दः (शून्ये), परानन्दः (प्राणापानयोः), ब्रह्मानन्दः (समाने), महानन्दः (उदाने), चिदानन्दो व्याने ; इति षडानन्द भूमय उपदिष्टाः, यासामेकः अनुसन्धाता उदयास्तमयविहीनोऽन्तर्विश्रान्ति-परमार्थरूपो जगदानन्दः। (तं० सा० पृ०—४०)

प्राणयोगः २) श्वासप्रश्वासगतिमालम्बनीकृत्याभ्यस्यमानः परिपूर्णता-भावनायोगः, स्थानकल्पनयोगविशेषः ।

अथ बाह्यविधिः। स एव स्थानकल्पनशब्देनोक्तः, तत्र त्रिधा स्थानं, प्राणवायुः, शरीरं बाह्यञ्च। तत्र प्राणे तावद् विधिः सर्वोऽसौ वक्ष्य-माणोऽध्वा प्राणस्थः कल्प्यते—इत्यादि। (तदेव पृ० ४५)

प्राणिनः — प्रमातारः सकलादकलं यावत् सर्वेऽपि।

प्राणापानादिपञ्चभूमिकानुरूपं प्राणनं तत्र तत्र निर्वहन्तः सकलादि-शिवान्ताः, सप्त प्रमातारः प्राणिनः।

बन्धः — आत्मनि पशुताभिमानः। तदभिमननावभासकः पारमेश्वर लीलाविशेषः।

प्रकाशमान एव यद् "न प्रकाशते" इत्यभिमननं तदपसार्यते। तदप-सारणमेव हि परमेश्वरतालाभो मुक्तिस्तदनपसरणमेव संसारः। अभिमननमात्रसारं ह्येतद्द्वयम्। उभयमपि चेदं भगवद्-विजृम्भितमेव।

(ई० प्र० वि० २—३—१७)

बुद्धिः — निश्चयात्मिकाऽध्यवसायशक्तिः।

तत्र बुद्धिरध्यवसायसामान्यरूपा।

(तदेव ३—१—११)

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

बुद्धिप्रमाता — बुद्धिमेवात्मानमभिमन्वानः स्वप्नदशाभाग्जीवः।

ततोऽपिसमधिकविवेकभाजः प्राणस्याप्यनित्यत्वादनुसन्धानयोग्यतामपश्यन्तो ज्ञानसुखाद्याश्रयभूतां बुद्धिमेव काणादप्रभृतयः— आत्मानमाहुः। (तदेव १ ६—५)

बुद्धियोगः (आणवोपाये) —ध्यानयोग एव आणवे।

दृश्यताम् प्राग्ध्यानयोगः आणवे, विशेपतश्चेति।

ब्रह्म (वेदान्ते) —ऐश्वर्यरहितं स्वमात्रनिष्ठमपरिमितं शुद्धं चैतन्यम्। बृहत्परममहृतिदि ब्रह्म। आत्मा।

तदेवमविद्यात्मकोपाधिपरिच्छेदापेक्षमेवेश्वरस्येश्वरत्वं, सर्वज्ञत्वं, सर्वशक्तित्वञ्च, न परमार्थतो विद्ययाऽपास्तसर्वोपाधिस्वरूपे आत्मनीशित्रीशितव्यसर्वज्ञत्वादि व्यवहारउपपद्यते।

(ब्र० सू० शा० भा० २—१—१४)

ब्रह्म (शैवे)— बृहद्-व्यापकं-बृंहितं जगदात्मकतया सुविकासं प्राप्तं पारमेश्वरं तत्त्वम्।

अन्तर्गतविश्ववीर्यसमुच्छलत्तात्मकविसर्गविश्लेपानन्दशक्त्येकघनं ब्रह्म-बृहद् व्यापकं बृंहितञ्च। न तु वेदान्तपाठकाङ्गीकृतकेवल-शून्यवादाविदूरवर्तिब्रह्मदर्शने इव। (प० त्री० वि० पृ० २२१)

ब्रह्मनिर्वाणम् —वैदान्तिकी मुक्तिः।

महाशून्यप्राये सौपुप्तकल्पे बृहति तत्त्वे लयः।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

ब्रह्मानन्दः — समानानामानं प्राणमवलम्ब्यानुभूयमाना चतुर्थी भूमिका आनन्दस्योच्चारयोगे ।

ततोऽनन्तस्फुरन्मेयसंघट्टैकान्तनिर्वृतः ।
समान भूमिमागम्य ब्रह्मानन्दम यो भवेत् ।

(तं० आ० ५—४६,४७)

भक्तिः (अपरा)— भगवत्प्रेमरूपा ।

कदा कामपि तां नाथ तव वल्लभतामियाम् ।
यथा मां प्रति न क्वापि युक्तं ते स्यात्पलायितुम् ।

(शि० स्तो० ९—७)

भक्तिः (परा)— भगवदभेदरूपा ।

ज्ञानस्य परमा भूमिर्योगस्य परमा दशा ।
त्वद्भक्तिर्या विभो कर्हि पूर्णा मे स्यात्तदर्थिता ॥

(शि० स्तो० ९—९)

भक्तिः (परापरा) भेदे सत्यप्यभेदानुभूतिरूपा विद्यादशोचिता ।

त्वन्मयोऽस्मि भवदर्चननिष्ठः सर्वदाहमिति चाप्यविरामम् ।
भावयन्नपि विभो स्वरसेन स्वप्नगोऽपि न तथा किमिव स्याम् ।

(तदेव—११—५)

भावना— शुद्धविकल्पाभ्यासः । शाक्तोपायः । ज्ञानयोगः ।

तथाविध(शुद्ध)विकल्पप्रबन्ध एव सत्तर्क इत्युक्तः ।
स एव च भावना भण्यते, अस्फुटत्वात् भूतमप्यर्थमभूतमिव
स्फुटत्वापादनेन भावयते ययेति । (तं० सा० पृ० २३)

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

शिवभावनयौषध्या बद्धे मनसि संसृते: ।
काष्ठकुडयादिषु क्षिप्ते रसवच्छिवहेमता ॥

(शि० दृ० ७—४७,४८)

भुवनाध्वा— आणवोपाये आलम्बनतया गृहीतानि ११८ भुवनानि ।
अध्वानमिमं सकलं देहे प्राणेऽथ धियि महानभसि ।
संविदि च परं पश्यन् पूर्णत्वाद् भैरवीभवति । (तं० सा० पृ० ६८)

भेदवाद:— शिवजीवयो: परस्परं भिन्नत्वस्य वाद: ।
शैवे अमर्दकशिष्या:, पाशुपता:, सिद्धान्तशैवाश्च भेदवादिन:, माध्वा:, न्यायवैशेषिकसांख्ययोगपरा अपि भेदवादिन एव ।

भेदाभेदवाद:— शिवजीवयोरंशतो भेदस्य, अंशतश्चाभेदस्य वाद: ।
शैवे श्रीनाथीया: वीरशैवाश्च, वैष्णवेषु निम्बार्कीया रामानुजीयाश्च भेदाभेदवादिन: ।

भेदाभेदोपाय:— शाक्तोपाय: ।......

.........शाक्तमुच्यते ।
भेदाभेदात्मकोपायं............॥ (तं० आ० १—२३०)

भेदोपाय:— आणवोपाय: ।

.........भेदोपायं तथाणवम् । (तदेव – १– २३०)

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**भैरवः (परः)—** शिव एव ।

भैरवो भरणात्मको महामन्त्ररवात्मकश्च ।

(प० त्री० वि० पृ०—६३)

**भैरवाः (परापराः)—** अभेदनिष्ठा ६४ शैवशास्त्रोपदेष्टारो भगवच्छिवावताराः ।

चतुःषष्ठिरद्वयप्रधाना भैरवभेदाः ।

(तं० आ० वि० खं० १ पृ० ४१)

इत्थं तन्त्रं रुद्रशिवभैरवाख्यं स्थितं त्रिधा ।
वस्तुतो हि त्रिधैवेयं ज्ञानसत्ता विजृम्भते ॥
भेदेन भेदाभेदन तथा चाभेदसन्धिना ।

(मा० वि० वा० १– ३९१, ३९२)

**भैरवाः (अपरे)—** अभेदनिष्ठाः मुक्तशिवाः ।

तेह् यत्र लोके दिव्यशरीरधारिणो जनैस्तत्र तत्र स्थानेषु पूज्यन्ते ।

**मठिकाः—** शैवशास्त्रगुरुशिष्यपरम्पराः, चतस्रः ।

श्री सन्ततिस्त्र्यम्बकाख्या तदर्धामर्दसंज्ञिता ।
इत्थमर्धचतस्रोऽत्र मठिकाः शाङ्करे क्रमे ।

(तं० आ० ४—२६६)

**मठिकागुरवः—** तन्त्रद्रष्टारो गुरवः ।

त्र्यम्बकादित्य प्रभृतयः ।

**मध्यमा वाक्—** बुद्धिमयी वाणी ।

केवलं बुद्ध्युपादाना क्रमरूपानुपातिनी ।
प्राणवृत्तिमतिक्रम्य मध्यमा वाक् प्रवर्तते ॥

(वा० प०)

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**मन:—** सङ्कल्पकमन्त:करणम् ।

सङ्कल्पादिकारणं मन: । (ई० प्र० वि० ३—१—११)

**मन्त्र: (वर्णात्मक:)**—मननत्राणस्वभावो वर्णसमूह: ।

मन्त्रास्तावन्मुख्यत एकैकवीजरूपा एव ।
क्वचिदक्षरसमूहात्मका अपि ।
तदाक्रम्य बलं मन्त्रा: सर्वज्ञवलशालिन: ।
प्रवर्त्तन्तेऽधिकाराय करणानीव देहिनाम् ॥

(स्पं० का० २६)

**मन्त्रा- (प्राणिन:)**—विद्येश्वरा: शुद्धा अपि भेददर्शिन: प्रमातार: । एकमात्र-मायीयमलभाज: ।

येन प्रकारेण विद्येश्वरा भगवन्तोऽनन्ताद्य वर्तन्ते । ते हि शुद्धचिन्मात्र गृहीताहम्भावा: स्वतस्तु भिन्नं वेद्यं पश्यन्ति ।

(ई० प्र० वि० ३-१-६)

**मन्त्राध्वा—** आणवोपाये कामराजादिबीजमन्त्रालम्बनक: प्रमातरि विश्रान्तोऽभ्यासविशेष: ।

मेयांशगामी स्थूलसूक्ष्मपररूपत्वात् त्रिविधो भुवनतत्त्वकलाध्व-भेद: । मातृविश्रान्त्या तथैव त्रिविध: । तत्र प्रमाणतायां पदाध्वा, प्रमाणस्यैव क्षोभतरङ्गशाम्यत्तायां मन्त्राध्वा, तत्प्रशमे पूर्ण-प्रमातृतायां वर्णाध्वा । (त० सा० पृ० १११--११२)

**मन्त्रेश्वरा:—** ईश्वरतत्त्वेऽवस्थिता: प्राणिन: । अभेदेऽपि स्फुटं भेदं पश्यन्त: प्रमातार: ।

मन्त्रेश्वरादिरूपस्य तु चैतन्यराशे: स्फुटीभूतमस्मद्बहिष्करणसरणि-सम्प्राप्त-भाववर्गप्रतिमं विश्वं प्रतिविम्बकल्पतया भाति ।

(ई० प्र० वि० ३-१-२)

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**मलम्**— आत्मस्वभावप्रच्छादनलीलाफलं ज्ञानसंकोचावभासनम्।

स्वात्मप्रच्छादनक्रीडामात्रमेव मलं विदुः।
स्वतन्त्रो हि विभुः किञ्चित् किं न स्वात्मनि भासयेत्॥

(मा० वि० वा० २-१८६)

**महानन्दः**— विकल्पात्मकद्वैतग्रसनतत्परा उदानमालम्ब्यानुभूयमाना पञ्चमी भूमिकानन्दस्योच्चारयोगे।

ततोऽपि मानमेयौघकलनाग्रासतत्परः।
उदानवह्नौ विश्रान्तो महानन्दं विभावयेत्॥
तत्र विश्रान्तिमभ्येत्य शाम्यत्यस्मिन् महार्चिषि॥

(तं० आ० ५—४७, ४८)

**महामाया (अपरा)**—विज्ञानाकलानामाश्रयभूता भूमिका।

मायातत्त्वस्योपरि विद्यातत्त्वाधश्चावश्यं तत्त्वान्तरेण भवितव्यं, यत्र विज्ञानाकलानां स्थितिः। यथोक्तम्-मायोर्ध्वे शुद्धविद्याधः सन्ति विज्ञानकेवलाः। इति (प० त्री० वि० पृ० ११७-११८)

**महामाया (परा)**—विद्येश्वराणामाधारभूता भूमिका। शुद्धविद्याया एवाधरा भूमिका। स्वस्वरूपे विपर्ययाभावे सत्यपि वेद्ये भेद-दृष्टिः।

योऽसाविदंभाग आच्छादनीयस्तस्य यदवभासनं तत्प्रधाना शुद्ध-विद्या। अन्यथा हि स इदमंशः केन भास्यताम्। मायायास्तत्रा-भावात्, भावे वा प्ररोहप्रसङ्गात्। अत एवेयं प्ररोहासहिष्णुं यत इदन्तां भासयति, ततः शुद्धा, भासनाच्च विद्येति। तत एवा-प्ररूढमायाकल्पत्वान्महामायेयं श्रीरौरवादिगुरुभिरुपदिष्टा...। येन प्रकारेण विद्येश्वरा भगवन्तोऽनन्ताद्या वर्तन्ते।

(ई० प्र० वि० ३-१-६)

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

महामाया (परतरा)– शुद्धविद्या मन्त्रेश्वराणां मन्त्रमहेश्वराणाञ्च ।

सम्भवन्ति हि॰ मायागर्भाधिकारिणो विष्णुविरञ्च्याद्यास्तदुत्तीर्णा अपि महामायाधिकृताः शुद्धाशुद्धा मन्त्रतदीशतन्महेशात्मानः ।

(तदेव १-१-१)

मातृका— आदिक्षान्ता वर्णमाला शाम्भवोपायोपयोगिनी, विश्वमात्मशक्तिप्रतिबिम्बकल्पतया साक्षात्कारयन्ती । तत्र वर्णास्तत्त्वात्मकतया साक्षात्क्रियन्ते ।

इति प्रतिबिम्बधारित्वमस्य । तच्च तावद् विश्वात्मकत्वं परमेश्वरस्य स्वरूपं नानामृष्टं भवति । चित्स्वभावस्य स्वरूपानामर्शनानुपपत्तेः स्वरूपानामर्शने वस्तुतो जड़तैव स्यात् । आमर्शश्चायं न सांकेतिकः । अपितु चित्स्वभावतामात्रनान्तरीयकः परनादगर्भ उक्तः.........(तं० सा० पृ० १२)

(स आमर्श एवाग्रे क्रमेण अकारादिक्षकारान्ततया निरूपितस्तत्र विस्तरतो द्रष्टव्यः)

माया—(तत्त्वम्) (१) शिवतातिरोधानात्मकं तत्त्वम् ।

(२) प्रथमं जडं तत्त्वम् जडसृष्टेरुपादानकारणभूतं तत्त्वम् ।

मायाशक्तिः पुनरचिद्रूपे शून्यादौ प्रमातृताभिमानं प्ररूढं दधती भावानपि चिन्मयान् भेदेनाभिमानयन्ती सर्वथैव स्वरूपं तिरोधत्ते आवृणुते विमोहिनी सा (ई० प्र० वि० ३—१—७)

तस्य च सृजतो (अनन्त नाथस्य) परमेश्वरेच्छामयं, तत एव च नित्यं, स्रक्ष्यमाणवस्तुगतस्य रूपस्य जडतयाऽऽभासयिष्यमाणत्वाद् जडं सकलकार्यव्यापनादिरूपत्वाच्च व्यापकं मायाख्यं तत्त्वमुपादानकारणम् । (तं० सा० पृ० ७७)

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**मायादशा—** स्फुटभेदप्रथात्मिका दशा ।

मायातो भेदिषु क्लेशकर्मादिकलुषः पशुः । (ई० प्र० ३—२—३)

**मायामलम्—** भेददृष्टिरूपं मलम् ।

भिन्नवेद्यप्रथाऽत्रैव मायाख्यं (मलम्) । (तदेव ३-२-५)

**मायाशक्तिः (अनुत्तरा)—**परमेश्वरस्य स्वभाव भूताभेदावभासनोन्मुखता ।

स्वरूपापरामर्शपरित्यागेनैव तु यद् विभिन्नतयापि विमर्शनं स्वरूपपरामर्श एव विश्रान्तम् "अहमिदमिति" सदशिवेश्वरपरमार्थं सा भगवतो मायाशक्तिः । (ई० प्र० वि० ४—१—४)

**मायाशक्तिः (अवरा)—**मायातत्त्वावभासस्य कारणभूता शक्तिः ।

......व्यापकं मायाख्यं तत्त्वमुपादानकारणम् । तदवभासकारिणी च परमेश्वरस्य माया नाम शक्तिस्ततोऽन्यैव ।

(तं० सा० पृ० ७७)

(दृश्यताम् मायातत्त्वम्)

**मायीयं मलम्—** मायामलमेव ।

भेददृष्ट्यात्मकं मलम् ।

**मालिनी—** नादिफान्तरूपा व्युत्क्रमेण स्थिता प्रक्षुब्धा वर्णमाला, शाम्भवोपाये सद्यःसिद्धिप्रदायिनी ।

तत्रैव च पुनर्भिन्नयोनि-मालिनीभट्टारिकानुसारेण फकारादीनामभिन्नयोनिमातृकानिवेशावाप्ततत्त्वान्तरस्थितीनामपि............ इत्यन्यथैव प्रक्रियायोजनं निरूपितम् ।

(प० त्री० वि० पृ० १२१ तः १२५)

यथेष्टफलसंसिद्धयं मन्त्रतन्त्रानुवर्तिनाम् ।
न्यसेच्छाक्तशरीरार्थं भिन्नयोनिं तु मालिनीम् ॥ (तदेव पृ. १५१)

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

मुक्तिः— (१) शिवस्वाभिमानः ।

येनोत्कीर्णं विश्वचित्रं स्वभित्तौ नानावर्णैश्चित्रितं येन भक्त्या ।
अन्ते स्वस्मिन्नृत्यते येन हृत्वा सोऽहं साहिब्कौलकारामशम्भुः ॥
(शि० जी. द. १)

इत्थंप्रकारकमभिमननं मुक्तिः । दृश्यतां प्राग् बन्धः इति ।

मुक्तिः— (२) (आपेक्षिकी) प्रलयाकलादि दशा ।
दृश्यतामग्रे मोक्षः (आपेक्षिकः) मोक्षाभासश्च इति ।

मुक्तिः— (३) (जीवतः) व्यामोहरहितावस्था—
दृश्यताम्—प्राग् जीवन्मुक्तः—इति ।

मुक्तिः— (४) (सूक्ष्मतरशरीरयुक्ता) मुक्तशिवानामवस्था ।

ते हि परशिवपदात् किञ्चिन्मात्रं बहिरवस्थिताः सन्तः पञ्चकृत्यविलासाननुभवन्तः स्वं रसं रसयन्तस्तिष्ठन्ति ।

मुक्ति (५) विदेहा—अशरीरा मुक्तिः । परिपूर्णशिवतात्मिका स्थितिः ।

ज्ञातेन्द्रजालतत्त्वस्य पश्यतोऽपीन्द्रजालं यथा न तत्त्वतो व्यामोहस्तथा प्रत्यभिज्ञातात्मस्वरूपस्य । ततो निवृत्ते प्रयाणप्रापितपर्यन्ते देहे परमेश्वरतैव । (ई. प्र. वि. २—३—१७)

मुक्तिः —(६) (समावेशरसा)

जीवतः एव पञ्चकृत्यानुभूतिचमत्कारः ।

अभ्यास-भावनाबलेन तु शिवशासनोपदिष्टेन देहघटादावेव परमेश्वरतासमावेशमभिनिविश्य पश्यत इहैव शरीरे पारमैश्वर्यांशधर्मोद्गमः, न तु वस्तुतः पूर्णता, देहत्वस्यैव सङ्कोचप्राणस्य गलने यथास्थितविश्वात्मकतापत्तेः । (तदेव २—३—१७)

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

मुद्रा (१)— (आणवयोगे) स्थूलदेहस्य संस्थानविशेषः करणयोगोपयोगी।

दृश्यताम्—विस्तरतस्तन्त्रसारे पृ० २०१ तः २०६ यावत्।

मुद्रा (२)— (चर्याक्रमे) अपूपविशेषो यश्चक्रयागे भुज्यते कौलैः।

मकाराणां मध्येऽसौ पञ्चमः।

मुद्रा (३) शाम्भवे—शिवतायाः स्थितेरभ्यासः।

दृश्यताम् प्राग् भैरवीयमुद्रा इति।

मूल प्रकृतिः — दृश्यताम्—प्राक् प्रकृतिरिति।

मोक्षः — (आपेक्षिकः) प्रलयाकलादीनां अवस्था, अपवर्गाद्याश्चावस्थाः।

ताः अवस्थास्तु कुतश्चिदशादेव मुक्तिः न सर्वथा। उक्तञ्च—
सांख्यवेदादिसंसिद्धान् श्रीकण्ठस्तदहर्मुखे।
सृजत्येव पुनस्तेन न सम्यङ् मुक्तिरीदृशी॥

(तं० आ० ६—१५२)

मोक्षः—(१—६) मोक्षस्य प्रकाराः

(दृश्यतामुपरि: मुक्तिः १ तः० ६ इति)

मोक्षाभासः— अत्यन्तमवरप्रकारको मोक्षः—

उक्तं स्वच्छन्दशास्त्रेतद् वैष्णवाद्यान् प्रवादिनः।
सर्वान् भ्रमयते माया साऽमोक्षे मोक्षलिप्सया॥

(तं० आ० ४—३८)

अन्यत्रत्यो ह्यपवर्गः कुतश्चिन्मुक्तिः, न सर्वत—।
इति निःश्रेयसाभास इति— (ई० प्र० वि० १—१—१)

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**याग: (शाक्तोपाये)**—चिद्वन्ही भावनया विश्वभावार्पणाभ्यास: ।

तत्र भावानां सर्वेषां परमेश्वर एव स्थिति: । नान्यद् व्यतिरिक्तमस्ति इति विकल्परूढये परमेश्वर एव समस्तभावार्पणं याग: ।

(तं० सा० पृ०—२५)

**योग:—(शाक्तोपाये)** पुन: पुन: परशिवस्वभावभूतस्य परिपूर्णशुद्धसंवित्-स्वातन्त्र्यस्यावमर्शनाभ्यास: ।

विचित्रै: शुद्धविद्यांशरूपैर्विकल्पैर्यद् अनपेक्षितविकल्पं स्वाभाविकं परमार्थतत्त्वं प्रकाशते तस्यैव सनातन-तथाविध-प्रकाश-मात्रता-रूढये तत् स्वरूपानुसन्धानात्मा विकल्पविशेषो योग: ।

(तं० सा० पृ०—२७)

**योग: (शैवे साध्यरूप:)**—जीवशिवयोरैक्यात्मक: ।

योगमेकत्वमिच्छन्ति वस्तुनोऽन्येन वस्तुना ।।

(मा० वि० तं० ४—४)

**योग: (शैव: साधनरूप:)** उपायत्रयमनुपायश्च ।

अनुपाय: शाम्भवोऽसौ चिदुपायस्तत: परम् ।
जडोपायस्त्वाणव: स्यात् स चापि बहुधा मत: ।।

(मा० वि० वा० १—९९७)

**रजोगुण: (सामान्यत:)** :—(१) प्रवृत्तिदु:खं चाञ्चल्यञ्च ।

रजो हि प्रकाशा-प्रकाश-चाञ्चल्यरूपं दु:खमुच्यते ।

(ई० प्र० वि० ४—१—३)

**रजोगुण: (२) मूलत:**—शिवस्य क्रियाशक्तिरेव पशौ संकोचमाप्ता सती तस्य रजोगुण: ।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

स्वरूपपरिज्ञाने तु भिन्नेषु भावेषु ज्ञानं, क्रिया, शुद्धमेव च भिन्नत्वं प्रकाशविमर्शशून्यम्—इति पशोः प्रकाशः प्रकाशाप्रकाशौ, अप्रकाशश्चेति क्रमेण सुखदुःखमोहलक्षणानि प्रकाशक्रिया-नियमन शीलानि सत्त्वरजस्तमांसि ।

(ई० प्र० वि० ४—१—४)

रजोगुणः (स्वभावतः)—चाञ्चल्यरूप दुःखम्, इष्टेन प्रकारेणाप्रकाशोऽनिष्टेन च प्रकाशः ।

सत्तानन्दः क्रिया पत्युस्तदभावोऽपि सा पशोः ।
द्वयात्मा तद्रजो दुःखं श्लेषि सत्त्वतमोमयम् ।

(ई० प्र० ४—१—६)

रागः (बुद्धिधर्मः)—आसक्तिः, इष्टतत्त्वम् ।

द्वेषवैराग्यविरुद्धेयं बुद्धिगता कापि विशेषता ।

रागतत्त्वम्— गुणारोपणमयोऽभिष्वङ्गो देहभोग्यादिषु जीवस्य ।

अभिष्वङ्गरूपः प्रमातरि देहादौ प्रमेये च गुणाद्यारोपणमय इव रागो व्याप्रियते । न च बुद्धिगतमवैराग्यमेव, तद्धि वृद्धस्य प्रमदायां न भवेदपि, रागस्तु भवत्येव । बुद्धिधर्माष्टके (वैराग्यादौ) अपि च दृष्टोऽभिष्वङ्गः ।

(ई० प्र० वि० ३—१—९)

रुद्रः (१) - संहारकृत्याधिष्ठातृकारणम् ।

यदेतत्कालादिकवेष्टितं प्रमातृतारूपं, तदेव यस्यां शुद्धमुपसंहृतप्रमेयजातं भवति दशायां संहाराख्यायां तस्यामधिष्ठातृदेवतात्वम् ......भजमानो भट्टारक ईश्वर एव रुद्रो भगवान् ।

(तदेव ३—२—१)

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**रुद्राः २ (शतम्)**—ब्रह्माण्डसंहारकाः ।

रुद्रस्य उक्ताधिकारावधिः । ब्रह्माण्डधारकाणां तद्दिनं शतरुद्राणाम् । निशा तावती । तेषामपि शतमायुः । शतरुद्रक्षये ब्रह्माण्डनाशः । (तं० सा० पृ० ५४)

**रुद्राः ३ (कञ्चुकतत्त्वेषु)**—कञ्चुकतत्त्वानां संहारकाः ।

यत्तु श्रीकण्ठनाथस्य स्वमायुः, तत् कञ्चुकवासिनां रुद्राणां दिनम् । तावती रजनी । तेषां यदायुस्तद् गहनेशदिनम्, तावती रात्रिः ।

(तं० सा० पृ० ५५)

**रौद्री**— सांसारिके सुखे पशून् नियोजयन्ती मोक्षमार्गनिरोधिनी शिवस्य शक्तिः ।

द्रावयित्री रुजां रौद्री रोध्री चारिवलकर्मणाम् ।

(तं० आ० ६-५७)

रौद्री सांसारिकानन्दं कदाचित् वितेरदपि ॥

(तं० आ० वि० खं० ४ पृ० ५०)

**वर्णः**— ध्वनिरूपः सूक्ष्मः प्राणः ।

प्राणः स्थूलः सूक्ष्मश्च......सूक्ष्मस्तु वर्णशब्दवाच्यः ।

(तं० सा० पृ० ३५)

**वर्णाध्वा**— आणवोपाये वाह्यालम्वनभूता वर्णाः । कालाध्वनि परमालम्वनम् ।

तत्र वर्णमन्त्रपदाध्वनः कालाध्वनि स्थितिः परसूक्ष्मस्थूलरूपत्वात् । (तं० सा० पृ० ४७)

**वामा**— वन्धयित्री शिवस्य शक्तिः ।

वामा संसारवमनात्......

(तं० आ० वि० खं ३ पृ० २५)

अणुं स्वरूपदृश्वानं वामाधो विनिपातयेत् ।

(तदेव खं० ४ पृ० ५०)

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

वासना:— प्राक्तनजन्मसंस्कारा: ।

वासनाख्यस्तु संस्कारो जीववृत्ति: । स एव जन्मजन्मान्तरेषु भ्रामयति ।

विकल्प: (१)— बौद्धा नामरूपकल्पना ।

विशिष्टा नामरूपविशेषसहकृता कल्पना, बौद्धोऽध्यवसाय: ।

विकल्प: (२)— वस्तुशून्यत्वे सति कल्पनामात्रं शब्दसहकृतम् ।

शब्दज्ञानानुपाती वस्तुशून्यो विकल्प: ।

(यो० सू० १—९)

विकल्प: (३)— अपोहात्मकं सुनिश्चितं वस्तुज्ञानम् ।

विविधा कल्पना, विविधत्वेन च शङ्कितस्य कल्पोऽन्यव्यवच्छेदनं विकल्प: (अतद्व्यावृत्तिरूप:) । (ई० प्र० वि० १—६—१)

विकल्प: (४) अशुद्ध :—जीवोचितं विकल्पज्ञानम् ।

अहमित्थमिदं वेद्मीत्येवमध्यवसायिनी ।
.................................. ॥
धीर्जायते ..................................॥ (तं० आ० १—३९, ४०)

विकल्प: (५) (शुद्ध:)—यथार्थ: एव स्वरूपनिश्चय: ।

प्रतिद्वन्द्विरूपो विकल्प उदित: संसारहेतुं विकल्पं फलयति । स च एवं रूप:.........विश्वोत्तीर्णो विश्वात्मा चाहमिति ।

(तं० सा० पृ० २१)

विकल्पबुद्धि:— संवृति: ।

वस्तुशून्यविकल्पमात्राश्रितोऽध्यवसाय: ।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**विज्ञानकेवलाः**— स्वातन्त्र्यशून्यशुद्धबोधरूपाः प्राणिनः ।

शुद्धबोधात्मकत्वेऽपि येषां नोत्तमकर्तृता ।
निर्मिताः स्वात्मनो भिन्ना भर्त्रा ते कर्तृतात्ययात् ॥

(ई० प्र० ३—२—६)

**विज्ञानाकलाः**— विज्ञानकेवलाः एव ।

विज्ञानं बोधात्मकं रूपं केवलं स्वातन्त्र्यरहितमेषामिति ।

(ई० प्र० वि० ३—२—७)

**विदेहमुक्तिः**— पराऽशरीरा मुक्तिः ।

देहपाते तु परमेश्वर एवैकरसः इति कः कुत्र समाविशेत् ।

(तदेव ३—२—१२)

**विद्या (१)** भेदाभेददृष्टिः ।

सामानाधिकरण्यं च सद्विद्याहमिदंधियोः ।

(ई० प्र० ३—१ ३)

**विद्या (२)** पशुदशायामेव स्वैश्वर्यप्रकाशिका शक्तिः ।

तस्यैश्वर्यस्वभावस्य पशुभावे प्रकाशिका
विद्याशक्तिः...... (ई० प्र० ३—१—७)

**विद्या (३)** विद्येश्वराणां महामाया ।

भेदधीरेव भावेषु कर्तुर्बोधात्मनोऽपि या ।
मायाशक्त्येव सा विद्येत्यन्ये विद्येश्वरा यथा ॥

(तदेव ३—१—६)

**विद्या (४) (अशुद्धा)**—पशोः ज्ञानसंकोचात्मिका किञ्चिज्ज्ञता ।

किञ्चिज्ज्ञत्वदायिन्यशुद्धविद्या कलातो जाता । सा च विद्या बुद्धिं पश्यति, तद्गतांश्च सुखादीन् विवेकेन गृह्णाति ।

(तं० सा० पृ० ८१)

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**विद्या (५) (कला)**—पुमादिमायान्तं व्यापिनी कला।

पुमादिमायान्ते विद्या,—वेद्यतिरोभात्रे संविदाधिक्यात्।

(तदेव पृ० १०९)

**विद्यातत्त्वम् (सद्विद्या) (६)**—इदमहमोः सामान्याधिकरण्यदृष्टिः। सदाशिवेश्वरयोर्दृष्टिः।

अहमिदम् इति समधृततुलापुटन्यायेन यो विमर्शः स सदाशिवनाथ ईश्वरभट्टारके च। (ई० प्र० वि० ३—१—३)

**विद्या दशा (७)**—भेदाभेद दशा।

मायाया उपरि शक्तेश्चाधो वर्तमानं सदाशिवेश्वरसद्विद्याख्यं तत्त्वत्रयं भेदाभेदमय्यां विद्याख्यायां दशायां वर्तते।

**विद्याभूमिका (८)**—विद्यादशैव।

भेदाभेदमयी मध्यमा भूमिका।

**विद्याशक्तिः शिवस्य (९)**—भेदाभेददशावभासिनी पारमेश्वरी शक्तिः।

वेद्यभावनिष्ठा दशा तत्त्वस्वरूपा.. ......या तु तन्निष्ठसंवेदनदशा सा शुद्धा विद्या। (ई० प्र० वि० ३—१—५)

**विद्येश्वराः**— मन्त्राः, महामायायां वर्तमानाः प्राणिनः। ते च शुद्धा अपि भेददर्शिनः।

बोधनामपि कर्तृत्वजुषां कार्ममलक्षतौ।
भिन्नवेद्यजुषां मायामलं विद्येश्वराश्च ते॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha
(ई० प्र० ३—२—९)

**विन्दुः—** प्रकाशात्मकः सिसृक्षास्वभावः-शिवः।

विन्दुरिच्छुः। इच्छाशक्तिस्वभावः शिव एव उक्तञ्च—"तन्त्रालोके।"

उदितायां क्रियाशक्तौ सोमसूर्याग्निधामनि।
अविभागः प्रकाशो यः स विन्दुः परमो हि नः॥

(तं० आ० ३ – १११)

**विमर्शः—** प्रकाशस्यात्मभूता स्वात्मचमत्करणक्रिया।

स्वभावमवभासस्य विमर्शं विन्दुरन्यथा।
प्रकाशोऽर्थोपरक्तोऽपि स्फटिकादिजडोपमः॥

(ई० प्र० १—५—११)

**विलयः—** पिधानकृत्यम्।

तिरोधानमत्र न विलयनरूपं मन्तव्यम्, यत् कृत्यपञ्चकमध्य आगमेषु गण्यते। (ई० प्र० वि० ३—१—७)

**विलासः—** पारमैश्वर्यव्यवहारः।

अभिनवरमणीयं सच्चिदानन्दकन्दं।
स्वनवनवविलासोल्लासनैकप्रवीणम्॥ (आ० वि० १—१)

**विवर्त्तः—** असत्यरूपोपग्रहः।

विवर्त्तते—तदसत्यरूपमात्मन्युपगच्छति। "असत्यविभक्तान्यरूपोपग्राहिता विवर्त्तः।" (शि० दृ० वृ० २—९)

**विश्रान्तिः—** कृतकृत्यतया क्वचिद् विश्रमणम्।

तत्र विश्रान्तिराधेया हृदयोच्चारयोगतः।
या तत्र सम्यग् विश्रान्तिस्तत् पराद्वैतमुच्यते।

(मा० वि० वा० २—४१, ४२)

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**विष्णुः—** स्थितिकृत्ये ऽधिष्ठाता देवाधिदेवः।

भिन्नस्य प्रमेयस्य प्रसरे सम्पादने ऽधिष्ठातृदेवतात्वं भजमानो ब्रह्मा, प्रसूते भिन्ने प्रमेये तत्सन्तानप्रवाहलक्षणे प्रसरे ऽधिष्ठातृदेवता विष्णुः। (ई० प्र० वि० ३—२—१)

**वैखरीवाक्—** मुखेनोच्चार्या श्रोत्रग्राह्या च वाणी।

स्थानेष्वभिहते वायौ कृतवर्णपरिग्रहा।
वैखरी वाक् प्रयोक्तृणां प्राणवृत्तिनिबन्धना॥

**व्यानः—** विश्वमयतानुभूतिरूपः प्राणनव्यापारः। (वा० पा०)

विलीन तु भेदे सर्ववेद्यराशि रूप तत्त्वभूतभुवनवर्गात्मक देहव्यापनरूपेण प्राणवृत्तिर्व्यानरूपा विश्वात्मकपरमशिवोचिता तुर्यातीतरूपा। (ई० प्र० वि० ३ - २—२०)

**व्रतम् (शाक्तोपाये):—** परशिवसमतादृष्ट्या विश्वभावावलोकनस्याभ्यासः।

सर्वत्र सर्वदा निरुपाय-परमेश्वराभिमान-लाभाय परमेश्वर-समताभिमानेन देहस्यापि घटादेरपि अवलोकनं व्रतम्। (तं० सा०—पृ० २७)

**शक्तिः—** शिवस्य शिवता।

तस्मात्समप्राकारेषु सर्वासु प्रतिपत्तिषु।
विज्ञेयं शिवरूपत्वं स्वशक्त्यावेशनात्मकम् (शि० दृ० ३—१७)
न शिवः शक्तिरहितो न शक्तिव्यतिरेकिणी।
... ... ... ... ... ... ...
शक्तिशक्तिमतोर्भेदः शैवे जातु न वर्ण्यते॥ (तदेव ३-२, ३)

**शक्तिः (त्रिके)—** प्राधान्येनोपास्यं तत्त्वम्। जीवस्य शिवत्वं प्रत्यारोहणस्य मार्गः।

न पुम्सि न परे तत्वे शक्तौ मन्त्रं नियोजयेत्।
पुंस्तत्त्वे जडतामेति परे तत्त्वेतु निष्फलः॥
शक्तौ मन्त्रो नियुक्तस्तु सर्वकर्मफलप्रदः॥

(तं० आ० वि० खं० ३ पृ० ४२५)

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

शक्तिः (महा)— परमः शिवः एव ।

परमशिवस्य शक्त्येकघनत्वेन महाशक्तिरित्यपि व्यपदेशः ।

शक्तिः (शिवस्य)—विश्वसृष्टिसंहारादिसामर्थ्यम् ।

शिवः शक्त्याभियुक्तो यदि भवति शक्तः प्रभवितुं ।
न चेदेवं देवो न खलु कुशलः स्पन्दितुमपि ।

(सौ० ल०—१)

शक्तितत्त्वम्— परशिवस्य विमर्शात्मकस्वातन्त्र्यप्रधानाभिव्यक्तिः ।

तदेवं प्रसृतो देवः कदाचिच्छक्ति मात्रके ।
विभर्ति रूपमिच्छातः.................. ॥ (शि० दृ०१—२९, ३०)

शक्तिपञ्चकम्—चिदानन्देच्छाज्ञानक्रियाः ।

आत्मैव सर्वभावेषु स्फुरान्निर्वृतचिद्विभुः ॥
अनिरुद्धेच्छाप्रसरः प्रसरद्दृक्क्रियःशिवः ॥

(शि० दृ० १—२)

शक्तिपातः— भगवतः स्वायत्त मनुग्रहकृत्यम् ।

अनिमित्तस्तथाचायं शक्तिपातो महेशितुः ।

(मा० वि० वा०१—६८८)

इत्थं पुराणशास्त्रादौ शक्तिः सा पारमेश्वरी ।
निरपेक्षैव कथिता सापेक्षत्वे ह्यनीशता । (तदेव १—६९८)

शाक्तोपायः— आत्ममात्रालम्बनो भावनामय उपायः ।

उच्चाररहितं वस्तु चेतसैव विचिन्तयन् ।
यं समावेशमाप्नोति शाक्तः सोऽत्राभिधीयते ॥

(मा० वि० तं० २—२२)

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**शाम्भवयोग:**— निर्विकल्प: स्वस्थितेरभ्यास: । (इच्छायोग:)

निराधारं मन: कृत्वा विकल्पान्न विकल्पयेत् ।
तदात्मपरमात्मत्वे भैरवो मृगलोचने ॥ (वि० भै०—१०८)

**शाम्भवी मुद्रा**— पद्मासनमधिष्ठाय समसर्वाङ्गमुपविश्या-
किञ्चिच्चिन्तनाभ्यास: ।

अन्तर्लक्ष्यविलीनचित्तवदनो योगी यदा वर्तते
दृष्ट्या निश्चलतारया बहिरसौ पश्यन्नपश्यन्नपि ।
मुद्रेयं खलु शाम्भवी भवति सा युष्मत्प्रसादाद् गुरो
शून्याशून्यविवर्जितं भवति यत् तत्त्वं परं शाम्भवम् ॥

(अनु० नि० स्तो—१)

**शाम्भवोपाय:**— इच्छायोग:, शाम्भवयोग: ।

अकिञ्चिचिन्तकस्यैव गुरुणा प्रतिबोधत: ।
जायते य: समावेश: शाम्भवोऽसावुदाहृत: ॥

(मा० वि० तं० २—२३)

**शिव: १** — शुद्ध: प्रकाशोऽन्त:कृतविमर्श: ।

सर्वथा त्वन्तरालीनानन्ततत्त्वौघनिर्भर: ।
शिवश्चिदानन्दघन: परमाक्षरविग्रह: ॥ (ई० प्र० ४—१—१४)

**शिव: (त्रिके २)**—त्रिकोणात्मके त्रिके परं तत्त्वम् ।

नरशक्तिशिवात्मकं त्रिकम् (प्र० हृ० प्रारम्भे)

**शिव: (३) (पुरणेतिहासयो:)**—उमापतिनाथ:, स्वच्छन्दनाथ: ।

कैलासवासी शिव: । दृश्यताम्—उमापति: ।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**शिवतत्त्वम्**— प्रकाशप्राधान्येनावभासमानं पूर्णं संवित्तत्त्वम् ।
परशिवस्यान्तः कृतविश्वापि विश्वोत्तीर्णावस्था ।

शिवतत्त्वं सदाविकल्पमेव विकल्पसूति स्वातन्त्र्यसरसमनादिसर्वादि-भूतं सिद्धम् । (प० त्री० वि० पृ० १३७)

शिवतत्त्वमिदमनाद्यन्तं स्वयं प्रथमानं पूर्णतात्मकनिरपेक्षतामात्रसत्तत्वं स्वातन्त्र्यसारमन्तःक्रोडीकृत्यात्मतैकपरमार्थं तत्त्वजातम् ।

(तदेव पृ० १४३)

**शिवभट्टारकः** शिवतत्त्वेऽधिष्ठाता ।

अत्र च तत्त्वेश्वराः शिवशक्तिसदाशिवेश्वरानन्ताः ।

(तं० सा० पृ० ७४)

**शुद्धविकल्पः**— बुद्धिगतस्तत्त्वज्ञाननिश्चयः ।

सचैवंरूपः-विश्वोत्तीर्णो विश्वात्मा चाहमिति ।

(तं० सा० पृ०. २१)

**शुद्धविद्या** १,२,३,—विद्या इत्येव ।

दृश्यताम्-विद्या, १, २, ३, इति एषैव सद्विद्या ।

**शून्यं (बौद्धे)** — (१) आलयविज्ञानोच्छेदरूपम् ।

(२) विषयाभासाभावत्वेन आत्मप्रज्ञप्तेरपि निर्विषयत्वेन विज्ञानतत्त्वस्यैवोच्छेदे सत्यभावप्रायं तत् ।

एवं कृती निर्वृतिमभ्युपेतो नैवावनिं गच्छति नान्तरिक्षम् ।
दिशं न काञ्चिद् विदिशं न काञ्चिद् क्लेशक्षयात् केवलमेति शान्तिम् । (सौ० नं० १६—२९)

अत एवार्थप्रतिभासस्येवात्मविज्ञप्तिप्रतिभासस्याप्यर्थो नास्ति ।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अर्थाभावात्तदपि विज्ञानमसत् । विजानातीति विज्ञानम् । ग्राह्याभावे विज्ञानं तदपि न युक्तम् । तस्मादर्थाभावाद् विज्ञातृत्वेन विज्ञानमसत् । (म० वि० सू० टी० १ ४)

**शून्यम् (शैवे)** — संकोचावभाससंभिन्नं संवित्तत्त्वमेव ।

सङ्कोचमात्ररूपं चित्तत्त्वं शून्यम्, भूतलं यथा घटाभाव: ।

(ई० प्र० वि० १—६—५)

संविन्मात्रं हि यच्छुद्धं प्रकाशपरमार्थकम् ।
तन्मेयमात्मन: प्रोज्झ्य विविक्तं भासते नभ: ॥
तदेव शून्यरूपत्वं संविद: परिगीयते । (तं० आ० ६—९—१०)

**शून्यप्रमाता** :— शून्यमेवात्मानमभिमन्वान: सौपुप्त: प्रमाता । शून्यप्रलयाकल: ।

चित्तत्वं मायया हित्वा भिन्न एवावभाति य: ।
देहे बुद्धावथ प्राणे कल्पिते नभसीव वा ॥
प्रमातृत्वेनाहमिति विमर्शो..........। (ई० प्र० १—६—४,५)

अवस्थायुगलं चात्र कार्यकर्तृत्वशब्दितम् ।
कार्यता क्षयिणी तत्र कर्तृत्वं पुनरक्षयम् ॥
कार्योन्मुख: प्रयत्नो य: केवलं सोऽत्र लुप्यते ।
तस्मिन् लुप्ते विलुप्तोऽस्मीत्यवुध: प्रतिपद्यते ।

(स्पं० का० १४—१५)

**शून्यप्रलयाकल:**—शून्यमेवात्मतयाभिमन्वान: प्रमाता ।
द्रष्टव्यम्—शून्यप्रमातेति ।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

श्रीकण्ठनाथः (१) अद्वैतादिभेदभिन्नानां शैवशास्त्राणां प्रवर्तने प्रेरको गुरूणामपि गुरुः।

श्रीमच्छ्रीकण्ठनाथाज्ञावशात् सिद्धा अवातरन्।
त्र्यम्बकामर्दकामिख्यश्रीनाथा अद्वये द्वये ॥
द्वयाद्वये च निपुणाः क्रमेण शिवशासने।

(त० आ० ३६—११,१२)

श्रीकण्ठेनेश्वरात्प्राप्तं ज्ञानं परमदुर्लभम्।
तेनापि तदधः प्रोक्तं रुद्राणामीश्वरेच्छया। (स्व० तं ९—८३४)

(२) अद्वैतशैवशास्त्रस्यादिगुरुः।

जयत्यनर्घमहिमा विपाशितपशुव्रजः।
श्रीमानाद्यगुरुः शम्भुः श्रीकण्ठः परमेश्वरः। (प० त्री० वि० पृ०2)

(३) अद्वैतशैवप्रचारे दुर्वाससः प्रेरको गुरुः।

कैलासाद्रौ भ्रमन् देवो मूर्त्या श्रीकण्ठरूपया।
अनुग्रहायावतीर्णश्चोदयामास भूतले ॥
मुनिं दुर्वाससं नाम भगवानूर्ध्वरेतसम्।
नोच्छिद्येत् यथा शास्त्रं रहस्यं कुरु तादृशम् ॥

(शि०दृ० ७—१०९, ११०)

(४) कैलासवासिनः शिवस्य गुरुः।
ममापि च पुरा दीक्षा तथा चैवाभिषेचनम्।
श्रीकण्ठेन पुरा दत्तं तन्त्रं सर्वार्थसाधकम्। (स्व० तं० ८—३६)

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

(५) बुद्धयादितत्त्वत्रयोविंशतिकस्य सृष्टिसंहारकारी भगवान् । ततो ब्रह्मा रुद्राश्च अवाद्यधिकारिण: अव्यक्ते तिष्ठन्ति, इति श्रीकण्ठनाथश्च तदा संहर्ता । एषोऽवान्तरप्रलय: । तत्क्षये सृष्टि: । तत्र शास्त्रान्तरमुक्ता अपि सृज्यन्ते । ((तं॰ सा॰ पृ॰ – ५५)

एवं क्षुब्धात् प्रधानात्कर्त्तव्यान्तरोदयो, नाक्षुब्धात्दिति क्षोभोऽवश्यमन्तरालेऽभ्युपगन्तव्य: इति सिद्धं सांख्यापरिदृष्टं पृथग्भूतं गुणतत्त्वम् । स च क्षोभ: प्रकृतेस्तत्त्वेश (श्रीकण्ठ:)धिष्ठानादेव । अन्यथा नियतं पुरुषं प्रतीति न स्यात् ।

(तदेव पृ॰ ८५)

सांख्यवेदादिसंसिद्धान् श्रीकण्ठस्तदहमुखे ।
सृजत्येव पुनस्तेन न सम्यङ् मुक्तिरीदृशी ॥ (तं. आ. ६—१५२)

श्रीनाथमठिका – द्वैताद्वैतशैव मठिका ।

श्रीनाथसन्ततिमहाम्बरधर्मकान्ति: ।
श्रीभूतिराजतनय: स्वपितृप्रसाद: ॥ (तं. आ. ३७—६०)

संगमादित्य:— त्र्यम्बकादित्यात् षोडश: पुत्रो: य: शैवशास्त्रमादाय कश्मीरान् प्रविवेश ।

……..स च कालेन कश्मीरानागतो भ्रमन् ।
नाम्ना स सङ्गमादित्यो वर्षादित्योऽथ तत्सुत: ॥

(शि. दृ. ७—१८, १९)

संवित्— प्रकाशविमर्शसामरस्यरूपा चिति: ।

प्रकाशमानं न पृथक् प्रकाशात्, स च प्रकाशो न पृथग् विमर्शात् ।

(वि. भै. उद्. पृ. १२२)

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

संवित्तिः— स्वसंवेदनम् ।

स्वप्रकाशात्मिका येयं संवित्तिः पारमार्थिकी ।
तत् स्वसंवेदनं प्रोक्तं यतो विश्वव्यवस्थितिः ।

(मा. वि. वा. १—४२७)

संवृतिः— विकल्पकल्पना ।

संवृतिर्विकल्पबुद्धिः । (ई. प्र. वि. २—२—३)

संवृतिसत्यत्वम्—विकल्पबुद्धिसमाश्रितं सत्यत्वं व्यावहारिकम् ।

संवृतिर्विकल्पबुद्धिस्तद्वशादुच्यतां संवृतिसत्यत्वम् ।
सत्यत्वस्यैव तु प्रकारस्तदिति द्विचन्द्रादिवन्नासत्यता ।

(ई० प्र० वि० २-२-३)

संवेदनम्— इन्द्रियजन्या साक्षादनुभूतिः ।

...... ... । तच्च (प्रामाण्यं) ऐन्द्रियके बोधे, सुखादिसंवेदने, योगिज्ञाने, चाविवादमेव, मुख्यतयैव प्रमेयरूपे आभासे साक्षाद् विश्रान्तेः । (ई. प्र. वि. २—३—२)

संहारः— कार्यजातस्य स्वे कारणे लयीकरणम् । प्रमेयस्य प्रमातृतत्त्वे लयीकरणम् ।

यदेतत् कालादिपञ्चकवेष्टितं प्रमातृतारूपं, तदेव यस्यां शुद्ध-मुपसंहृतप्रमेयजातं भवति दशायां संहाराख्यायाम् ।

(तदेव ३—२—१)

संहारकृत्यम्—परमेश्वरस्य पञ्चकृत्येष्वेकम् ।

सृष्टिसंहारकर्तारं विलयस्थितिकारकम् ।
अनुग्रहकरं देवं प्रणतार्तिविनाशनम् ।

(स्व. तं., १—३)

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

सकलः प्राणी— कलोपलक्षितकार्यकरणयुक्तस्त्रिमलः प्रमाता ।
देवादीनाञ्च सर्वेषां भविनां त्रिविधं मलम् ॥
(ई० प्र. ३—२—१०)

सत्कार्यवादः (सांख्यानाम्) (१)—मूलप्रकृतौ सर्वस्य विश्वस्य सदैवाव-स्थितेः सिद्धान्तः ।
विश्वं हि मूलप्रकृतिपरिणामविशेषात्स्वरूपतयाभिव्यज्यते ।
पुनश्च परिणामतोऽव्यक्ततामेव गच्छति ।

सत्कार्यवादः—(२) शैवानाम् परमेश्वरस्वरूपे सर्वस्यापि संविद्रूपतया सदा विद्यमानत्वम् ।
चिदात्मैव हि देवोऽन्तःस्थितमिच्छावशाद्बहिः ।
योगीव निरुपादानमर्थजातं प्रकाशयेत् ॥ (ई. प्र. १—५—७)

सत्यम् — (पारमार्थिकम्) (१) त्रैकालिकं सत्यम् ।
तच्च स्वयं परमेश्वर एव ।

सत्यम्— (व्यावहारिकम्) (२) विश्वमेवेदं सर्वम् ।
एतद् व्यवहार एव सत्यतयावभासते न पुनः परमार्थतया ।
परमार्थतस्तु सर्वमिदं चिन्मात्रम् ।

सत्यम्— (सांवृतम्) (३) विकल्पबुद्ध्यावभासमानम् ।
तच्च नामरूपादिकं कल्पनाश्रितमेव ॥

सत्वम्— (गुणः) सुखप्रकाशात्मिका पशोः विशेषता प्रकृतावपि प्रसारिता तेन ।
स्वरूपापरिज्ञाने भिन्नेषु भावेषु ज्ञानं, क्रिया, शुद्धमेव च भिन्नत्वं प्रकाशविमर्शशून्यम् । इति पशोः प्रकाशः प्रकाशाप्रकाशावप्रकाश-श्चेति क्रमेण सुखदुःखमोहलक्षणानि प्रकाशक्रियानियमनशीलानि सत्त्वरजस्तमांसि । (ई. प्र. वि. ४—१—४)

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**सत्त्वम् (मूलतः)**—शिवस्य ज्ञानात्मकत्वमेव पशुताभूमौ सङ्कोचं प्राप्तम्।

स्वाङ्गरूपेषु भावेषु पत्युर्ज्ञानं क्रिया च या।
मायातृतीये ते एव पशोः सत्त्वं रजस्तमः ॥ (ई. प्र. ४—१—४)

**सत्त्वम् (व्यवहारे)**—स्वसत्तानन्दप्रकाशः पशोः।

प्रियपुत्रादेरेकघन एव हि प्रकाशः सुखम्......
... ... ... ... ... ... ...
पशोः सा सत्ता सत्त्वं तदभावस्तमो द्वयात्मा रजः।

(ई. प्र. वि. ४—१—६)

**सदाशिवतत्त्वम्**—ध्यामलप्राये भेदराशौ भेदाभेदतया प्रथनं प्रमातुः। भेदाभेदभुवि प्रमातृप्राधान्यप्रथनभूमिका।

शुद्धचैतन्यवर्गो यो मन्त्रमहेश्वराख्यः, तस्य........ ध्यामलप्रायमुन्मीलितमात्रचित्रकल्पं यम्दावचक्रम्, तथा संहारे च ध्वंसोन्मुखतया तथाभूतमेव चकास्ति, प्रतिविम्बप्रायतया, तस्य चैतन्यवर्गस्य तादृशि भावराशौ तथा प्रथनं नाम यच्चिद्विशेषत्वं तत् सदाशिवतत्त्वम्। (ई. प्र. वि. ३—१—२)

**सदाशिवभट्टारकः**—सदाशिवतत्त्वेऽधिष्ठाता तत्त्वेश्वरः।

यस्तु सदाशिवभट्टारक ईश्वरभट्टारकश्च ध्येयोपास्यादिरूपतया सब्रह्मविष्णुतुल्यः पृथगेव मन्तव्यो, न तु नामसारूप्याद् भ्रमितव्यम्। (ई. प्र. वि. ३—१—२)

**सद्विद्या १, २, ३,**—शुद्धविद्यैव १, २, ३,

**समानः**— प्राणापान योर्विच्छेदभूमिः।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

तत्र प्राणापानयोर्यश्छेदो विश्रान्तिः कञ्चित् कालं, तदात्मना सकलरसादिवर्गस्योर्ध्वाधरतिर्यक्षु समानीकरणव्यापारात्मा, तत एव हृत्पद्मविकासदानाद् भुक्तपीतजरणकारी समानः।

(ई. प्र. वि. ३—२—१९)

**समावेशः—** स्वात्मनि शिवताया आवेशः। शिवभावस्य साक्षादावेशे पशुभावस्य तत्कालं निमज्जनम्। तुर्यदशायास्तुर्यातीतपदस्य वा साक्षात् स्वसंवेदनरूपानुभूतिः।

यदा तूक्तगुरुपदेशदिशा तेनैवाहम्भावेन स्वातन्त्र्यात्मना व्यापकत्वनित्यत्वादिधर्मपरामर्शमात्मनि विदधता ततः शून्यादेः प्रमेयादुन्मज्ज्येवास्यते, तदा तुर्यातीतावस्था। यदापि परामृष्टतथाभूतवैभवादिनित्यैश्वर्यसम्भेदेनैवाहम्भावेन शून्यादिदेहधात्वन्तं सिद्धरसयोगेन विद्धयते तदास्यां तुर्यदशायां तदपि प्रमेयतामुञ्चतीव। सेयं द्वय्यपि जीवन्मुक्तावस्था समावेश इत्युक्ता शास्त्रे।

(तदेव ३—२—१२)

**समुच्छलनम्—** स्वानन्दोल्लासतो वहिः प्रसरणम्।

अतश्च संविदो देव्या विश्वस्मिन् भावमण्डले।
स्वात्मन्येवोच्छलत्त्वं किं खण्डनादापि जायते।

(मा. वि. वा. १—२४१)

निम्नं तडागपानीयं कः प्रवर्तयितुं क्षमः।
परिपूर्णे पुनस्तस्मिन् प्रवाहाः सर्वतोमुखाः॥

(तदेव १—२४५, ४६)

**सम्बन्धः—** भिन्नयोरभेदकल्पनयैकरूपतयावभासनम्।

भेदाभेदात्मसम्बन्धसहसर्वार्थसाधिता।
लोकयात्रा कृतिर्यस्य स्वेच्छया तं स्तुमः शिवम्॥

(सं. सि.—१)

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**सविकल्पं ज्ञानम्**— विशेषनामरूपादिनिश्चयात्मकं ज्ञानम्।
साभिलापोऽतद्व्यावृत्तिरूपोऽध्यवसायः।

तदतत्प्रतिभाभाजा मातृैवातद्व्यपोहनात्।
तन्निश्चयनमुक्तो हि विकल्पो घट इत्ययम्।

(ई. प्र. १—६—३)

**सवेद्यं सौषुप्तम्**—प्राणसुषुप्तिः यत्र देहलघुत्वगुरुत्वसुखादि मनाक् संवेद्यत एव सा सुषुप्तिः।

तत्र शून्यसौषुप्ते न किञ्चिद् व्यतिरिक्तं वेद्यम् इति मायीयमलाभावादपवेद्यं तत्। प्राणसुषुप्तौ तु स्पर्शकृतस्य सुखदुःखादेर्भावादमायाख्यमस्ति मलम्। (ई० प्र० वि० ३—२—१३)

**साक्षात्कारः (१)**—निर्विकल्पकं विषयसंवेदनम्।

**(प्रत्यक्षः)** साक्षात्कारक्षणेऽप्यस्ति विमर्शः कथमन्यथा।
धावनाद्युपपद्येत प्रतिसन्धानवर्जितम्॥

(ई० प्र. १—५—१९)

**साक्षात्कारः**— अपरोक्षमात्मदर्शनम, स्वसंवेदनस्वरूपम्।

**(अपरोक्षः)**— साक्षात्कृतभवद्रूपप्रसृतामृततर्पिताः।
उन्मूलिततृषो मत्ताः विचरन्ति यथारुचि॥

(शि. स्तो. १२—४)

**सादाख्यं तत्त्वम्**—सदाशिव तत्त्वम्।

सादाख्यम्-सदाख्यायां भवम्। यतः प्रभृति सदिति प्रख्या।

(ई. प्र. वि. ३—१—२)

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**सिद्धान्तः—(१)** सिद्धस्य वस्तुन इत्थंभावव्यवस्था ।

इदमित्थंभूतं चेत्यभ्यनुज्ञायमानमर्थजातं सिद्धम् ।
सिद्धस्य संस्थितिरित्थम्भावव्यवस्थ धर्मनियम: ।

(न्या. भा. १—१—२६)

**सिद्धान्तः - (२)** शैवसिद्धान्तसम्प्रदायस्तमिलदेशीयः ।

सिद्धान्ते कर्म बहुलं मलमायादिरूपितम् ।

(तं. आ. ३७—२७)

**सुषुप्तिः—** शून्ये पुर्यष्टके वा ज्ञेयानुपरक्ते विश्रान्तिः ।

शून्ये बुद्ध्याद्यभावात्मन्यहन्ताकर्तृतास्पदे ।
अस्फुटारूपसंस्कारमात्रिणि ज्ञेयशून्यता ।
साक्षाणामान्तरी वृत्तिः प्राणादिप्रेरिका मता ।
जीवनाख्याऽथवा प्राणेऽहन्ता पुर्यष्टकात्मिका ।
तावन्मात्रस्थितौ प्रोक्तं सौषुप्तं प्रलयोपमम् ।
सवेद्यमपवेद्यञ्च मायामलयुतायुतम् ॥

(ई प्र. ३—२—१३ त १५)

**सौषुप्तम्—**सुषुप्तिरेव ।

**स्थानकल्पनायोगः—**वाह्यं देशकालात्मकमध्वानमालम्ब्य भाव्यमानस्याखण्डस्य परमेश्वरस्य साक्षादनुभूतेरभ्यासः ।

अथ बाह्यविधिः—स एव स्थान कल्पनशब्देनोक्तः ।
तत्र त्रिधा स्थानम्, प्राणवायु:, शरीरं बाह्यञ्च ।

(तं. सा. पृ. ४५)

**स्थितिः—** तत्त्वभुवनादेः प्रवाहणाख्यं कृत्यं परमेश्वरस्य ।

प्रसृते भिन्ने प्रमेये तत्सन्तानप्रवाहलक्षणे प्रसरेऽधिष्ठातृदेवता विष्णुः ।

(ई. प्र. वि. ३—२—१)

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**स्पन्दः—** अचलस्यापि चलत्तावभासः । उच्छलनम् । स्फुरत्ता । घूर्णिः ।
**(स्पन्दनम्)**

स्पन्दनञ्च किञ्चिच्चलनम् । एषैव किञ्चिद्रूपता, यदचलमपि चलमाभासः इति । प्रकाशस्वरूपं हि मनागपि नातिरिच्यतेऽतिरिच्यत इवेति तदचलमेवाभासभेदयुक्तमिव च भाति ।

(तदेव १—५—१४)

**स्फुरत्ता—** स्पन्दनमेव । प्रकाशस्य स्वाभाविकैव विमर्शनाख्या क्रियाविष्टता ।

चितिः प्रत्यवमर्शात्मा परा वाक् स्वरसोदिता ।
स्वातन्त्र्यमेतन्मुख्यं तदैश्वर्यं परमात्मनः ॥
सा स्फुरत्ता महासत्ता देशकालाविशेषिणी ।
सैषा सारतया प्रोक्ता हृदयं परमेष्ठिनः ॥

(ई० प्र० १—५—१३, १४)

**स्फूर्तिः—** स्फुरत्तैव ।

**स्मृतिः—** प्रागनुभूतस्य विषयस्य संस्कारोद्बोधबलेन पुनस्तथैवावभासः ।

यो भावः पूर्वमनुभवकाले तद्देशकालप्रमात्रन्तरसाचिव्येन पृथक्कृतो न चाहन्तायामेव विलीनीकृतः, स तादृगेव तमसेवाच्छाद्यावस्थापितः संस्कारशब्दवाच्यः । तस्य तमाच्छादकमपहस्तयति । तत्रापहस्तिते स पूर्ववत् पृथक्कृत एवावभाति ।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

(ई० प्र० वि० १—४—१)

**स्मृतिशक्ति:**—वैचित्र्येण स्मर्तृस्मार्यभावावभासनशक्ति: (ई० प्र० १-३-७)।

तेन क्वचिदाभासे गृहीतपूर्वे यत् संवेदनं बहिर्मुखमभूत्, तस्य यदन्तर्मुखं चित्स्वरूपत्वम्, तत् कालान्तरेप्यवस्थास्नु स्वात्मगत तद्विषयविशेषे बहिर्मुखत्वं परामृशति। इत्येषा स्मृतिशक्ति:।

(तदेव १—३—७)

**स्वप्नदशा**— मनोमात्रप्रतिष्ठो ज्ञातृज्ञेयादिव्यवहार:।

मनोमात्रपथेऽप्यक्षविषयत्वेन विभ्रमात्।
स्पष्टावभासा भावानां सृष्टि: स्वप्नपदं मतम्॥

(ई० प्र० ३— २—१६)

**स्वलक्षणम्**— अन्याननुयायी, असम्बद्धो नियतदेशकालाभासपरिच्छिन्नो वस्तुमात्राभासो निर्विकल्पक:।

स्वम् – अन्याननुयायि, स्वरूपसङ्कोचभाजि, लक्षणम्-देशकालाकाररूपम् यस्य (ई० प्र० वि० १—२—१) एक स्वलक्षणं स्वेकस्मिन् देशाभासे कालाभासे च विश्रान्ते:। देशकालाभासावेव हि सामान्यताप्रयोजक-व्यापित्वनियत्व-खण्डना-विधान-सविधवृत्ती विशेषरूपतां वितरत:। (तदेव २—३—५)

**स्वसंवेदनम्**— स्वयमेव वा, स्वस्यैव वा, उभयथा वा, साक्षादनुभव:।

स्वप्रकाशात्मिका येयं संवित्ति: पारमार्थिकी।
तत् स्वसंवेदनं प्रोक्तं यतो विश्वव्यवस्थिति:॥

(मा० वि० वा० १—४२७)

स्फुरन्निति धर्मिणो हेतोश्च स्वसंवेदनप्रत्यक्षं प्रमाणम्।

(शि० दृ० वृ० १—२)

सर्वं शिवरूपमिति स्वसंवेदनसिद्धे व्यवहारमात्रं साध्यमिति।

(तदेव १—३)

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**स्वातन्त्र्यसिद्धान्तः**—पराद्वैतशैवसिद्धान्तः । परिपूणपारमैश्वर्यसिद्धान्तः ।

तस्मात् प्रकाश एवासौ मतो यः परमः शिवः ।
स एव चिन्त्यमहिमा स्वातन्त्र्योद्दामघूर्णितः ॥
प्रकाशते तथा तैस्तैः स्वभावैरच्युतस्थितिः ।

(मा० वि० वा० १—६९, ७०)

युगपत् स हि संविदात्मकः स्वातन्त्र्याद् बहुधा प्रकाशते ।

(तदेव १—१२६)

तत् स्वातन्त्र्यात् स्वतन्त्रं तत् स्वात्मनि प्रोच्छलत् स्थितम् ।

(तदेव १—३५२)

**होमः (शाक्तोपाये)**—चिदग्नौ भावनया विश्वविलापनम् ।

परमेशसंविदनलतेजसि समस्तभावग्रासरसिकताभिमते तत्तेजोमात्रावशेषसहसमस्तभावविलापनं होमः ।

(तं० सा० पृ० २६)

———

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

# ग्रन्थ–संकेत–सूचिः

| | |
|---|---|
| अ. प्र. सि. | अजडप्रमातृसिद्धिः । |
| अ. सं. को. | अनेकार्थसंग्रहकोषः । |
| आ. वि. | आत्मविलासः । |
| ई. प्र. | ईश्वरप्रत्यभिज्ञा । |
| ई० प्र० वि | ईश्वरप्रत्यभिज्ञाविमर्शिनी । |
| क. उ. | कठोपनिषद् । |
| खं. | खण्डः । |
| गी. सं. | गीतार्थसंग्रहः । |
| गौ. पा. का. | गौडपादकारिका । |
| तं. आ. | तन्त्रालोकः । |
| तं. आ. वि. | तन्त्रालोकविवेकः । |
| तं. सा. | तन्त्रसारः । |
| त्रि. म. स्तो. | त्रिपुरामहिम्नस्तोत्रम् । |
| नि. | निरुक्तम् । |
| न्या. भा. | न्यायभाष्यम् । |
| न्या. मं. | न्यायमञ्जरी । |
| न्या. सू. | न्यायसूत्रम् । |
| प. च. | परमार्थचर्चा । |
| प. सा. | परमार्थसारः । |
| प. त्री. | परात्रीशिका । |
| प. त्री. वि. | परात्रीशिकाविवरणम् । |
| पृ. | पृष्ठम् । |
| प्र. हृ. | प्रत्यभिज्ञाहृदयम् |
| बो. पं. द. | बोधपञ्चदशिका । |
| ब्र. सू. शां. भा. | ब्रह्मसूत्रशाङ्करभाष्यम् । |
| भास्क. | भास्करी । |
| म. वि. सू. टी. | मध्यान्तविभागसूत्रटीका । |



CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

| | |
|---|---|
| म. या. त्रिं. | महायानविंशकम् । |
| मा. च. वि. | मातृकाचक्रविवेकः । |
| मा. वि. तं. | मालिनीविजयतन्त्रम् । |
| मा. वि. वा. | मालिनीविजयवार्तिकम् । |
| यो. भा. | योगभाष्यम् । |
| यो. सू. | योगसूत्रम् । |
| वा. प. | वाक्यपदीयम् । |
| विं. शा. | विंशतिकाशास्त्रम् । |
| वि. भै. | विज्ञानभैरवः । |
| वि. भै. उद्. | विज्ञानभैरवोद्द्योतः । |
| शि. जी. द. | शिवजीवदशकम् । |
| शि. दृ. | शिवदृष्टिः । |
| शि. दृ. वृ. | शिवदृष्टिवृत्तिः । |
| शि. सू. वि. | शिवसूत्रविमर्शिनी । |
| शि. सू. वृ. | शिवसूत्रवृत्तिः । |
| शि. स्तो. | शिवस्तोत्रावलिः । |
| सं. सि. | सम्बन्धसिद्धिः । |
| स. द. सं. | सर्वदर्शनसंग्रहः । |
| स. मं. शा. | सर्वमङ्गलाशास्त्रम् । |
| सां. का. | साङ्ख्यकारिका । |
| सौ. नं. | सौन्दरानन्दम् । |
| सौं. ल. | सौन्दर्यलहरी । |
| स्पं. का. | स्पन्दकारिका । |
| स्पं. प्र. | स्पन्दप्रदीपिका । |
| स्वं. तं. | स्वच्छन्दतन्त्रम् । |
| स्व. उद्. | स्वच्छन्दोद्द्योतः । |

———

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

# शुद्धिपत्रम्

| पृष्ठं | पंक्तिः | अशुद्धं | शुद्धम् |
|---|---|---|---|
| १० | ६ | वतमान | वर्तमान |
| ,, | १७ | योगं | भोगं |
| ,, | २० | साम्यति | शाम्यति |
| १२ | ५ | चालन्त्य | चालयन्त्य |
| १३ | ८ | महर्वि | महर्षि |
| ,, | २० | मिनि | मिति |
| १४ | १ | मच्येतत् | मप्येतत् |
| ,, | ,, | मध्य | मप्यध्य |
| ,, | १७ | चित | चित्त |
| १५ | २ | बोद्ध | बौद्ध |
| ,, | ७ | तच्वं | तत्त्वं |
| १६ | ११ | तन्व्यं | तन्त्र्यं |
| १७ | १५ | तच्वस्य | तत्त्वस्य |
| ,, | १६ | दुपपच्य | दुपपत्ति |
| ,, | १७ | यदवी | पदवी |
| १८ | २४ | ऽयनेन | ऽप्यनेन |
| २२ | १७ | तन्त्र | तन्त्र्य |
| २४ | २९ | सूचि | सूचिः |
| २७ | १३ | इव | इच |
| ,, | १४ | णो | र्णो |
| ,, | १७ | दुवर्सासो | दुर्वाससो |
| २८ | ५ | पाठस्थः | पीठस्थः |
| ,, | ११ | ञ्यम्बक | त्र्यम्बक |
| २९ | ५ | सङ्गादि | सङ्गमादि |
| ३३ | ३ | लोस्कतु | लोकस्तु |
| ३३ | १० | हृदङ्ग | हृदयङ्ग |

| पृष्ठं | पंक्तिः | अशुद्धं | शुद्धम् |
|---|---|---|---|
| ३४ | १ | वैचत्र्ये | वचित्र्ये |
| ३७ | १७ | प्रत्तिपा | प्रतिपा |
| ३८ | २ | चलात्ता | चलत्ता |
| ४१ | १ | मावाद | मवाद |
| ४२ | २ | टतीय | तृतीय |
| ४४ | १ | विश्वो | विश्वौ |
| ,, | ३ | यवहा | यवहा |
| ४५ | ७ | बहि | बंहि |
| ,, | ९ | शाक्ति | शक्ति |
| ,, | १९ | राख्थम् | राख्यम् |
| ५१ | २ | निरोधिनो | निरोधिनी |
| ५४ | ६ | सवस्मि | सर्वस्मि |
| ५६ | ८ | देह देवा | देहादेवा |
| ,, | १३ | मवाक् | मनाक् |
| ५७ | १९ | सवषां | सर्वेषां |
| ५९ | १८ | शरार | शरीर |
| ६१ | १ | परमश्वर | परमेश्वर |
| ६२ | ५ | स्वपये | विषये |
| ६७ | ४ | दिदम | तदिदम |
| ७१ | १ | न वाश्ति | नैवास्ति |
| ,, | १ | दीशी | दीशो |
| ,, | ३ | चर्वाक | चार्वाका |
| ७२ | १५ | प्रभति | प्रभृति |
| ७३ | ९ | युक्ती | युक्तो |
| ७५ | ११ | शष | शेष |
| ८३ | १७ | तस्यव्व | तस्यैव |

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

